॥ श्रीरस्तु ॥

# ॥ तारावळीस्तवः ॥

वाङ्नेतृमुख्यदिविषद्गणमौळिरत्न-
नीराजितांघ्रियुगळे मम सन्निधेहि ।
नो चेदिमं तव पदांबुजभक्तियुक्त-
मन्यः क ईष्ट इह रक्षितुमब्धिजे माम् ॥ १ ॥

देवित्वदीयपदपद्मपरागधूळी-
लेशायिता ननु पुरन्दरभाग्यलक्ष्मीः ।
तद्दर्शयत्तव विराजति पादयुग्मं
पाकारिमौळिमणिमण्डितमब्धिकन्ये ॥ २ ॥

लोके वरौ जलजकंबुनिधी सदारौ
त्वत्पादसेवनाविधिं समवाप्य नित्यं ।
ख्यातिं स्वजातिषु महोन्नतिमाप्तवन्तौ
तत्को न देवि तव पूजनमीहतेऽन्यः ॥ ३ ॥

नीरं विगाह्य सुमहत्तप आभितप्त्वा
निक्षिप्य पादयुगळे तव कोमळत्वं ।
प्राप्तं तपःफलमयं जलजानि मात-
स्त्वद्वक्त्रकान्तिसमतान्दधते ऽब्धिकन्ये ॥ ४ ॥

मातस्त्वदीयवरपादनखा जयन्ति
त्वत्पादरुग्विजितमब्जकुलं समीक्ष्य ।

---

१ पद्मनिधिशङ्खनिधी ॥

स्वान्वर्थतां पदनमस्क्रियया ह्यवाप्तुं
पद्मारयः किल समापतितास्तु मन्ये ॥ ५ ॥

स्वर्भूमिरुट्सुमसमर्पणकैतवेन
मद्भ्ये निधाम गणमप्सरसां सुवर्णे ।
दातृत्वरूपधनभाक्त्वदतीव हृष्ट-
स्सन्तुष्टये तव ददाति कुसीदरूपम् ॥ ६ ॥

सत्संगतिं समुपगम्य पुरा स्वभूत्यै
सन्मार्गतस्सकलदिङ्मृगलोचनेशः ।
चन्द्रो दधाति तव वक्त्रतुलामवाप्तुं
कांक्षत्यतो बहुलखेदमुपात्तगर्वात् ॥ ७ ॥

प्रालेयपङ्क्तिकिरणोबहिरक्षिशोभा-
भाक्त्वं त्ववाप्य हि विमाद्यगि मुग्धबुध्या ।
राजत्यतीव करुणाघ्राणियुक्त्वदास्य-
चन्द्रे सुखाय बहिरान्तरलोचनानाम् ॥ ८ ॥

पादांबुजं हृदि करोमि नमत्सुरेन्द्र-
नीलाभमौळिमणयस्तव यत्र मातः ।
कारुण्यपूरमकरन्दझरीविलोभ-
लोलमधुव्रतरुचिन्दधते ऽब्धिकन्ये ॥ ९ ॥

काठिन्यवत्यपि नमज्जनमार्दवे त्व-
त्पादाब्जयुग्ममनिशश्वरदब्धिकन्ये ।

---

१ पद्मारयः चन्द्राः बाहुळयन्तु बहुषु दृश्यते ।
२ भूरिदुःखं कृष्णपक्षे क्षयरूपश्च ।



विष्णोर्हृदि प्रकटयत्तदपीह योग्य-
मास्माकमित्यधिवसत्यथ भक्तगेहम् ॥ १० ॥

बृन्दारकास्तव पदानतिमाचरय्य
संप्राप्य निस्तुलपदं स्वसुखानुभूत्यै ।
तत्रापि कल्पतरुमूलतले ऽभिपूज्य
त्वामुत्तरोत्तरसुखैकपदं लभन्ते ॥ ११ ॥

रंभोर्वशीप्रमुखवारसुदृङ्नमस्या-
संसक्तगर्भकितकोकनदाभमीढे ।
यत्सेवया जननि दीनजनो ऽपि संप-
त्पूर्णो भवत्यतितरां तव पादयुग्मम् ॥ १२ ॥

नीराजितं दिविषदीश्वरमौळिशोण-
रत्नप्रदीपनिकरैर्जगतामधीशे ।
पादांबुजं प्रणमितामितभाग्यदायि
वन्दे ऽब्धिजे तव कृपाभरितान्तरङ्गे ॥ १३ ॥

त्वत्पादरोचिषि जगत्परितो ऽब्धिकन्ये
भास्वत्यहर्निशमपास्ततमःप्रभावे ।
नूनं रविः प्रथमभूधरगो ऽपि सृष्ट-
स्तद्दृष्टिदोषपरिहारकमात्रमेषः ॥ १४ ॥

बालप्रभाकरचयान्कति शारदेन्दु-
संघान्कतीह सृजतीति विलज्जयित्वा ।

---

१ केशमक्षे तु गर्भकं इत्यमरः तत इत च प्रत्ययः ।

पादश्च वक्त्रमयि देवि सदा विधाता
स्वात्मोपगूहनकृते हि विलीयते ऽब्जे ॥ १५ ॥

प्राचीनभानुजलजप्रथितप्रवाळ-
बन्धूकजेत्रवरपादयुगं भवत्याः ।
तुल्यं जगत्युपमिमे ऽब्धिसुते ऽत्र केन
कुत्रापि नाप्तमरविन्दसदृक्षनेत्रे ॥ १६ ॥

आच्छादितस्तवपदाब्जमयूखशोभा
जालोत्करैर्दिनकरो ऽब्धिसुते ततश्च ।
चित्रं मृगाङ्करुचयो मलिनप्रकाशाः
जाताः कथं पदमहत्वमतोवदामि ॥ १७ ॥

त्वन्मन्दहासकिरणप्रसरो ऽङ्कभूत-
जैवात्रकोरुकिरणस्सुरकामिनीभिः ।
विन्यस्यते स्तवकबुद्धिमतीभिरेष-
हस्तैर्विलूय मुहुरब्धिसुते वतंसः ॥ १८ ॥

नीरन्ध्रकल्पतरुमूलविनिर्मितेंद्र-
नीलाभरत्नचयकृप्तसुखासनं त्वां ।
आसेदुषीमधिकरास्थितचारुकीर-
वाग्विभ्रमोपचिततुष्यदुदाराचिंतां ॥ १९ ॥

क्षीरांबुधिं कमलकोमळपाणिपाद-
शोभामयूखनिकरैर्धृतपद्मरागं ।
आतन्वतीं गुरुकृपाकालितैरपाङ्ग-
वीचीचयैरमृतसिन्धुमिवातिवेलं ॥ २० ॥

१ एतदारभ्य श्लोकत्रयमेकान्वयं ।



सांक्रामिकैरिवगुणैः पदपङ्कजस्य
कान्त्यातिनीलवदपि प्रथमानकीर्ते ।
विष्णोर्हृदा कलयतीमतिरागयुक्त-
न्ध्यायामि चेतसि कृपाभरितान्तरङ्गाम् ॥ २१ ॥

दारिद्र्यभञ्जनकृते जलजासने त्वां
वंदे कृपां कुरु सुधाब्धिसुते मयीह ।
त्वत्सेवया जगति को ननु सश्रितार्थ-
संतुष्टधीर्भवति नाब्धिसुते वद त्वं ॥ २२ ॥

नैसर्गिकं करतलारुणभावमब्धि-
कन्ये तथाप्यतितरामरुणारुणन्त्वं ।
वन्दारुमोहमयपाशविलुंटनेन
धत्से ततस्तव तु कापि न जातु हानिः ॥ २३ ॥

त्वद्वक्त्रनीरजाविलोचननीलकञ्ज-
शोभामयूखनिकरैर्यदि पुष्पवन्तौ ।
नेत्रीकृतौ मुरभिदा भजतोविकास-
भावं विचित्रचरितं किमुवर्ण्यते ते ॥ २४ ॥

त्वय्येव भूतिमहिमा त्वयि पालनत्व-
न्त्वय्येव सर्जनविधिर्यदिहामनन्ती ।
तत्सर्वमब्धितनये त्वदपाङ्गधारा-
वीचीकणव्यतिकरेण किलेति मन्ये ॥ २५ ॥

त्वामन्तरेण किमहं शरणं व्रजामि
दैवं जगज्जननि कांक्षितदात्रि मातः ।

१ रक्तकान्तियुक्तं अनुरागयुक्तश्च

त्यक्त्वा निरन्तरघनाघनजातवृष्टि-
ङ्कांक्षन्ति किं गिरिसरस्स्रवदंबु लोकाः ॥ २६ ॥

सारस्वतं प्रथितभूतिमहत्वमायु-
र्दैर्घ्यञ्च पादभजनं तव धीरधीत्वं ।
दीनाय मह्यमधुना विरत त्वमंब
लोके विमुञ्चति हि नार्भकमेव माता ॥ २७ ॥

ओजोवतीं सरळनिस्तुलवृत्तजातां
शुभ्रांशुहर्षजननीं जननीं रसस्य ।
तारावळीं हृदि कुरुष्व सुधाब्धिकन्ये
हारावळीषु कृपया जगततामधीशे ॥ २८ ॥

ये श्रद्धया पठन्तीमामग्र्यां तारावळीं सदा ।
तेषां लक्ष्मीर्गृहे वासं करोति हितकारिणी ॥ २९ ॥

इति नेय्वेलि वेंकटरामदैवज्ञ कृतिष्वन्यतमा
तारावळीस्तुतिः संपूर्णा ॥

---

१ पूर्वतनं विशेषणचतुष्टयं तारावळ्यां हारावळ्यामप्यन्वेति ॥ तारावळीशब्देन एतद्ग्रन्थनाम अन्यत्र ताराणां नक्षत्राणां आवळी पङ्क्तिरित्यप्यवगम्यते ॥

॥ श्रीरस्तु ॥

## ॥ विज्ञप्तिः ॥

ताम्रपर्णीनदीतीरे बहुदेवालयान्वितम् ।
कुरुकानामकं क्षेत्रं राराजीति महत्तरम् ॥
यत्रावतीर्णो भगवान् वितरन् श्रितवांछितम् ।
आदिनाथ इति ख्यातो लक्ष्मीनाथो विराजते ॥
तत्र बाभाति गैर्वाणविद्याशाला च काचन ।
पाणिनीयादितन्त्राणि च्छात्रा यस्यामधीयते ॥
तत्र प्राथमिकाचार्यपदमध्याधितिष्ठता ।
मुदा साम्बशिवाख्येन कौण्डिन्यान्वयजन्मना ॥
रामचन्द्रपदाम्भोजबम्भरायितचेतसा ।
देवताविषयाः काश्चिद्रचिताः कृतयो बुधाः ॥
तद्वाचान्नीरसत्वेऽपि प्रतिपाद्यानुभावतः ।
आद्रियन्तां सहृदयैस्तागुणाग्राहिभिर्भुवि ॥

---

॥ श्रीरस्तु ॥

## ॥ वरदविनायकस्तुतिः ॥

जानकी जानिपादाब्जं निधाय हृदि सादरम् ।
कुर्वे वरदविघ्नेशस्तुतिमीप्सितसिद्धये ॥

त्रिलोक्यां न कोपि प्रणोतुं समीष्टे
गजास्यं प्रयस्यन्नपीष्टप्रदन्तं ।
महिम्नातमीयेन संप्रेर्यमाण-
स्तथापिप्रमोदात् कथंचित् स्तवीमि ॥

*

हृदब्जे मदीये प्रतिष्ठाप्य देवं
मृडानीतनूजं सुराधीश वंद्यं ।
सदानन्दवारिप्रवाहैरमेयै-
रभिस्नाप्यं भक्त्या समीडे गजास्यम् ॥ १ ॥

सदाध्यानरूपैस्समर्च्यप्रसूनै-
र्मुदा कीर्तयेऽहं विदां ध्येयमूर्तिम् ।
प्रदातुं सहर्थं प्रणम्रेष्टवर्गं
मदान्ध्यापनोदेऽपि शक्तं जडानाम् ॥ २ ॥

अलभ्यं किमस्तीह पक्षे वळक्षे
चतुर्थ्यां समाराध्य हैरम्बबिम्बम् ।
यतस्तत्र पूजाविधानेन पूर्वे
पुमर्थानशेषानवापन्महान्तः ॥ ३ ॥

अनाराध्य सर्वे तदीयं पदाब्जं
समस्तेऽपि कर्मण्यसाफल्यशल्यम् ।
लभन्तेऽन्तरायप्रणष्टस्वयत्नाः
स्वकीयापराधादसंपूर्णकृत्याः ॥ ४ ॥

जनन्यङ्कदेशे विहर्तुं प्रयान्तं
कुमारं समीक्ष्य प्रधावन् गजास्यः ।
मृडान्यर्धभागे पितुर्वक्षसिस्थं
विभूषाभुजङ्गं जवेनाग्रहीद्यः ॥ ५ ॥

कुतो वा समग्राहि भूषात्वयेति
प्रमोदाज्जनन्याभवान्यानुयुक्तः ।
तदैवं समाख्यत्किशोरोऽपि बुध्या
समालोच्य वाचं ससन्दर्भसाध्वीम् ॥ ६ ॥



इतो भोगिभुग्वाहमारुह्य पार्श्वे
समायाति तूर्णं मुदा कार्तिकेयः ।
तदीयो मयूरः क्षुधापीडितोऽयं
पितुर्भूषणम्मे गिरेरित्यगृह्णाम् ॥ ७ ॥

इतीमां गिरन्तां वदन्तं गजास्यं
समन्ताच्च सेव समायातदेवैः ।
प्रहासप्रसूनैस्समभ्यर्च्यमानं
गृहीत्वानिजाङ्के शिवान्याक्षिपत्तम् ॥ ८ ॥

तदा मोदमाना मृडानी नितान्तं
शिरोयस्य जघ्रौ गजेन्द्रास्य भाजः ।
सदाहं भजे तत्पदाम्भोजयुग्मं
कृतार्थोभवाम्यत्र तेनैव नूनम् ॥ ९ ॥

कलां देहि मह्यं फलाभिप्रदात्रीं
स्थिरां देहि भक्तिं गणेशत्वदंघ्रौ ।
श्रियं देहि पूर्णा सतीं देहि बुद्धिं
हृदम्भोजकोशे विकासं प्रदेहि ॥ १० ॥

इमं विघ्नराजस्तवं भक्तिपूर्वं
जनाश्शुद्धचित्ताः पठन्तिक्षितौये ।
सदाभीष्टवर्गं ददात्येव तेषां
चिदाकाररूपो वदान्योगणेशः ॥

आण्डापुरग्रामवासी नाम्ना साम्बशिवो मुदा ।
व्यधत्त वरदेभास्यस्तुतिमिष्टार्थदायिनीम् ॥

———

॥ श्रीरस्तु ॥

## ॥ शरवणभवषट्कम् ॥

रघुकुलमणिदीपं भक्तभानुरूपं
निरसितजनतापं निस्तुलस्वप्रतापं ।
हृदयनळिनमध्ये रामचन्द्रं वितन्वन्
शरवणभवषट्कं साधुहृद्यन्तनोमि ॥

शर्वास्य कैरवकपर्वामृतांशुमिमर्वायमानशिखिनं
सर्वाधिकं प्रणत गुर्वाकृतिं हृदयगर्वापनोद निपुणम् ।
दुर्वाङ्कुरप्रणयिपूर्वाञ्चितं विनयखर्वातिदूरमनिशं
दुर्वारदर्पभरचर्वाति मोदभृतमर्वागहं गुहमये ॥ १ ॥

राकाशशाङ्कशतनीकाशवक्त्रधरमेकान्ततो गुहमहं
नाकाधिराजमुखलोकाधिपालदृपपाकात्तदिव्यवपुषम् ।
मूकानपीह बहु वाकाविधातुमधिकाकारशक्तिभरितं
केकानिनादिरथमेकाग्रधीर्विनतशोकापहं हृदि भजे ॥ २ ॥

वन्दारु देवसुखकन्दायितांघ्रिनतबृन्दावनैकनिरतं
नन्दातिरेककृतबृन्दारकेन्द्रनुतिसन्दानितस्वहृदयम् ।
खिन्द नभक्तजननिन्दापवादगणभिन्दानभूरिकरुणं
वन्दामहे गुहममन्दादरेण फलसन्दायकं श्रितवताम् ॥ ३ ॥

णत्वाङ्कितोलसति सत्वाकृते सकलतत्वात्मकस्तवमनु-
र्धृत्वायमन्तरिहभित्वात्मबन्धमनघत्वां प्रयाति सुकृती ।
नत्वार्थये तमथ नुत्वा सदामहिमवत्वाद्विशाखसदयं
हृत्वाशु मामकममत्वादिदोषमपि गत्वाधियं विहरताम् ॥४॥

भारावनम्रितमयूराकृतिं वहति योऽरातिरत्र गुहते
घोरानपि त्वमिहशूरानहन्नमितसारानहो निशिचरान् ।



पारातिगामि गुणवाराशिमाशुसुमहारार्चितं दिविषदां
मारारिपुत्रहृदि नीरागिभिर्विधृतमाराधये तवपदम् ॥ ५ ॥

वासाय शङ्करविलासाभिवर्धकघृणासारतेऽस्तु हृदयं
दासायिताम्बुजविकासांघ्रियुग्मगुहभासा तिरस्कृतरवे ।
कासारशोभिमधुमासारविन्दसमहासाभिरामवदनो
नासाग्रदत्तनयनासाद्यमानदृढधीसारतां वितरमे ॥ ६ ॥

एताम्भवाम्बुनिधिपातादतीव चिरभीतानुतप्तमनसां
पोतात्मिकांनुतिमपेताशसाधुभिरधीतां पठन्तिभुवि ये ।
त्राता गिरिप्रवरजातात्मजाभिमत शीतावलोकविधिना
पूताश्च ते हृदयवीतानुरागमुनिगीतामुदं विदधते ॥ ७ ॥

शरकाननजन्मानं वरदानौत्सुक्यवन्तमधिकृत्य ।
वेङ्कटरमणप्रीत्यैरचितास्तुतिरस्तु साम्बशिवनाम्ना ॥

---

॥ श्रीरस्तु ॥

## ॥ श्रीमन्नामगिरीश्वरीस्तुतिः ॥

श्रीमन्नामगिरीश्वरीनुतिमिमां कर्तुं यतो मामिका
जिह्वावाञ्छति लौकिकोक्तिनिवहैः क्लिष्टा च दुष्टा मुहुः ।
तस्माद्धन्यतमेयमद्यसहसास्यादेवसापावनी
व्याप्यापारकृपं त्रिलोकजननी वीक्षाविशेषात्करम् ॥

मातस्ते महिमानमादिकवयो वाल्मीकिमुख्याश्चिरं
सर्वं वर्णयितुं मुनीन्द्रचरणाः नालम्बभूवुः क्षितौ ।
एवञ्चेदितरे नरानिपुणतां दध्युः कथं तद्विधा
वात्मानं कृतकृत्यतां गमयितुं स्तुत्यातवेह शिवे ॥ १ ॥

शक्रादित्य कृशानुमारुतमुखा देवास्समस्ता अपि
तत्तत्कर्मसु कौशलं विदधते कारुण्यलेशेनते ।

भासन्ते सकलाः पदार्थनिवहास्त्वद्भासिता भूतले
मातस्तावकमेव वैभवमिदं सर्वं समुज्जृम्भते ॥ २ ॥

वेधास्सृष्टिविधौ गदाभृदवने मृत्युञ्जयस्संहृतौ
प्रागल्भ्यं दधतीहशक्तिमपरामालम्बमानास्तव ।
किंवानल्पविजल्पनेन तृणमप्याकम्पितुं लघ्वहो
नेष्टेकिञ्चिदपीहलोकजननीं त्वामन्तरेणाक्षितौ ॥ ३ ॥

मातस्त्वच्चरणारविन्दयुगळं नन्तुं महान्तश्शिरा-
दागत्यात्रवसन्ति ये सुकृतिनस्त्रैलोक्यनाथे मुदा ।
तेषां शीर्षमनेकजन्मसुकृतप्राप्यैः परं पांसुभि-
स्त्वं पूतीकुरुषे त्वदीयपदगैरिन्द्रादिदेवार्थितैः ॥ ४ ॥

चेतस्त्वं द्रविणाशयाभुविसतां सङ्गं त्यजत्सर्वदा
किं राजानमुपेत्य दुर्भटचयैर्वीतं मुदालिङ्गितम् ।
किं तुष्टूषासि तावता किमुफलं स्यात्तेपरं किल्बिषं
तस्माद्ध्यर्थामिदं विचिन्तय सदा श्रीनामगिर्यम्बिकाम् ॥ ५ ॥

भूपालाभुवनेकृतादिषुयुगेष्वासंस्त्रिपुप्राक्तनाः
श्रीमत्पूरुमहाबलिप्रभ्रतयो वादान्यकं बिभ्रतः ।
कालेये ममये तु तादृशमहीपालोस्तियः कोपि वा
तत्तेषां हिदिदृक्षयालमधुना सेवस्वचेतोऽम्बिकाम् ॥ ३ ॥

आर्यास्सेवध्वमम्बामखिलजनमनो वांछितार्थप्रदात्री
मीशित्रीं स्वर्वधूनां त्रिभुवनजननीं राजराजेश्वरीन्तां ।
संसारारण्यभूमावचिररुचिमिवाभासमानां हि भुक्ति
भोक्तुं किं यूयमत्रभ्रमथवतबतस्वस्तिनैवेह किञ्चित् ॥ ७ ॥

लक्ष्मीः क्षीराम्बुराशेरिहवसतिजुषो मानवान्मानयन्ती
सर्वान्दीनानिहत्यातवितुमवततारात्रभूमावितीदं ।



आस्माकं भाग्यमेव प्रणमतजननी पादयुग्मेऽविळम्बं
लब्धं कोवा विजह्यान्निधिमिहविधिना पूरुषो भूतलेऽस्मिन् ॥

भावत्कीमम्बयस्मात्रिदशपरिषदागीयमानां सुकीर्ति
श्रुत्वा नागास्समस्ता निरवधिकसुखाधीनतामीलिताक्षाः ।
नैजं चक्षुश्श्रुतित्वं हतविधिविहितं विघ्नितानन्दधारं
गर्हन्ते तत्त्वमेषाभवसि निरुपमाक्षीरवाराशिकन्ये ॥ ९ ॥

यामाश्रित्य प्रकृत्यासुहृदयसुलभां साधवोमालवीयान्
प्राप्योत्तुङ्गानपाङ्गाननवधिकरुणा वारिपूरोत्तरङ्गान् ।
तादात्म्याच्चक्रपाणेर्निरतिशयचिदानन्दसान्द्राभवन्ति
सेवे पद्मालयान्तां श्रितनिजजनताभीष्टसन्तानवल्लीम् ॥१०॥

एतां लक्ष्मीस्तुतिं ये प्रतिदिनमवनावामनन्ति प्रसन्नां
ध्यात्वा कन्यामनन्यां कलशजलनिधेराश्रितेच्छावदान्याम् ।
तेषां संसारचक्रभ्रमणजमचिरात्खेतमुत्सार्यदूरात्
नित्यानन्दानुभूतिं वितरति कमला वत्सलाभक्तिमत्सु ॥

साम्बेनरचितं ग्रन्थमिममङ्गीकरोतु सः ।
वेङ्कटाद्रौ वसन् विष्णुर्भगवान् रघुनन्दनः ॥

---

॥ श्रीरस्तु ॥

## ॥ श्रीमद्रामतोटकदशकम् ॥

श्रितत्राणप्रवीणन्तं चरणं शरणङ्गतः ।
सीतापतेः प्रसादाय दशकेन स्तवीमितम् ॥

शरणागतवत्सल दाशरथे करुणावरुणालय पालय मां ।
सततं पतितं विपदम्बुनिधौ रघुवीरसमुद्धरमामचिरात् ॥ १ ॥

अमरींशवरीमवलाश्च शिलां विहगं निजसत्पदगं कृपया ।
कृतवा निहयस्तवतस्य विभो सुकरं नभवेक्तिमुकर्मश्रुति ॥ २ ॥
बहुजन्मकृतामिहमूर्तिमतीं सुकृतालिमहो निगदन्ति सताम् ।
अवनौभुवनावनस्य कृते रघुवंशभवं यमहन्तमये ॥ ३ ॥
मुनिमानसमानसहंसमिमं क्षितिजाननवारिजभानुरुचिम् ।
दशकन्धरभूधरपक्षपविं रघुपुङ्गवमाकलये हृदये ॥ ४ ॥
असुरार्दित निर्जररक्षकते करुणानिपतेन्मयिरामकदा ।
चतुरास्यमुखादिविदेवततिः पदयोः पतितातवयाचतियांम् ॥
हरचापभिदातव राममुदं हृदयेयमिनामतनोत्सहसा ।
ह्रियमप्यवनीमवतां रजनीचरवंशभुवां भुविभूरिभियम् ॥ ६ ॥
अखिलागमवेद्यमनन्तगुणं कलशाम्बुनिधौ सततं शयितम् ।
कमलासनयाकृतवासममुं मुरवैरिणमातनवै हृदये ॥ ७ ॥
नमतामर्मितां दहते ममतामनुतापमरङ्गिरते च सताम् ।
इनवंशसमुद्भवकुञ्जरते नमनालिरियं भवतादनघा ॥ ८ ॥
सकृदेव पदेह्वदि राघवते सुकृतीकुरुतेय इहातिमुदा ।
भवसागरचंक्रमणं विजहत्सहसावचसामधिपो भवति ॥ ९ ॥
रघुवंशसुधाम्बुधिचन्द्रमसं रमणीयतनुं रचये हृदये ।
रमतां कृपया मम चित्तग्रहो रमयाजनकात्मजयासचिरम् ॥१०॥
इति रामनुतिं भुवियेमनुजाः स्थिरभक्तिभृतो ब्रुवतेऽनुदिनम् ।
न च ते दधते भवरोगभयं दयया रघुनन्दनसम्भवया ॥

श्रीमन्मदीयकुलदैवतवेङ्कटेश
पादारविन्दमकरन्दरसानुसिक्तम् ।
चित्तं समर्पयतितोटकवृत्तकुसुं
श्रीरामचन्द्रदशकं मम तत्पदाब्जे ॥

---

# ॥ किराताष्टकम् ॥

( पूर्वप्रकाशितात्परम् )

यक्षप्रेतपिशाचभूतनिवहा दुःखप्रदाभीषणा
बाधन्ते नरशोणितोत्सुकधियो ये मां रिपुप्रेरिताः ।
चापज्यानिनदैस्त्वमीशसकलान् संहृत्य दुष्टग्रहान्
गौरीशात्मजदैवतेश्वरकिराताकार संरक्ष माम् ॥ ६ ॥
द्रोग्धुं ये निरतास्त्वदीयपदपद्मैकान्तभक्ताय मे
मायाच्छन्नकलेवराश्च विपदानाद्यैस्सदाकर्मभिः ।
वश्यस्तम्भनमारणाद्यकुशलप्रारम्भदक्षानरीन्
दुष्टान् संहर देवदेवशबराकारत्रिलोकेश्वर ॥ ७ ॥
तन्वाचा मनसा गिरापि सततं दोषश्चिकीर्षन्त्यलं
त्वत्पादप्रणतस्य मे निरपराधस्यापि ये मानुषाः ।
सर्वान्नाशय तान् गिरीशसुत मे तापत्रयौघानपि
त्वामेकं शबराकृतेभयहरन्नार्थं प्रपन्नोस्म्यहम् ॥ ८ ॥
कष्टं राजभटैस्सदापि परिभूतोहं खलैर्वैरिभि-
श्चान्यैर्घोरतरैर्विपज्जलनिधौ मग्नोस्मि दुःखातुरः ।
हाहा किङ्कर वै विभो शबरवेषन्त्वामभीष्टप्रदं
वन्देऽहं परदैवतं कुरुकृपान्नाथार्तबन्धो मयि ॥ ९ ॥
स्तोत्रं यः प्रजपेत्प्रशान्तकरणो नित्यं किराताष्टकं
सक्षिप्रं वशगान् करोति नृपतीन् आबद्धवैरानपि ।
संहृत्यात्मविरोधिकान्खलजनान्दुष्टग्रहानप्यसौ
यात्यन्ते यमदूतभीतिरहितो दिव्यां गतिं शाश्वतीम् ॥
इति किराताष्टकम् ॥

॥ श्रीरस्तु ॥

श्रीमते रामानुजाय नमः ॥

श्रीतोदाद्रिनाथो विजयते ॥

# ॥ चक्रवर्तिजयम् ॥

तोदाद्रीशः श्रीपतिस्सद्गुणाढ्यो
वेदान्तेड्यो ब्रह्मरुद्रेन्द्रवन्द्यः ।
पादाम्भोजा सङ्गिनामिष्टदाता
मोदाद्दत्तामिष्टमद्यास्मदीयम् ॥ १ ॥

वानाद्रिभट्टनाथाख्य मुनीशानामनुज्ञया ।
चक्रवर्तिजयं कुर्वे ज्ञापकाय सदा सताम् ॥ २ ॥

विक्ठोरिया जननभूम्यवनादिवृत्तं
श्रीवज्रजूबिलिनिमित्तकृते मदीये ।
पद्यप्रबन्धमुपपादितमत्र वक्ष्ये
तज्ज्येष्ठपुत्रनृपतेर्जननादिवृत्तम् ॥ ३ ॥

नवनिधिपरिपुष्टा नैगमश्वेतजुष्टा
गृहशिखरखविष्टा पूःपुरोर्वीप्रकृष्टा ।
विधिबहुमतिसृष्टा यालकाख्या विशिष्टा
नरपतिवसतीष्टा लण्डनित्यस्ति दृष्टा ॥ ४ ॥

येड्वेर्ड्सेवन्त्संज्ञनृपस्सभाति
तस्यामभूद्योऽग्र्यसुतो हि राज्ञ्याः ।
विक्टोरियायाः कविदीपवर्षे ( १८४१ )
नवम्बराख्ये नवमेऽह्निमासे ॥ ५ ॥

शैशवात्प्रभृतिविक्रममुख्यै स्सद्गुणैस्स्वजननीमनुकुर्वन् ।
राष्ट्रभारभरणार्थमकार्षीन्नीतिशास्त्रविविधायुतशिक्षाम् ॥ ६ ॥



एवं कुर्वन्यौवनं प्राप्नुवन् स-
प्रिन्साःप्वेल्सित्याख्यया भासमानः ।
डेन्मार्ग्देशाधीशपुत्रीं विवाह्या-
लक्सान्द्राख्यां स्वानुरूपां मुमोद ॥ ७ ॥

काले याते धीरो नीतिज्ञो विनयवांश्च करुणाढ्यः ।
निजमातृवत्प्रतीतः कारणतुल्यं किलास्ति भुविकार्यम् ॥

क्रमात्तमात्मजं क्षमाशपादिमानितं
क्षमाधरासुराङ्गरादराद्धराभरार्हविक्रमम् ।
सुमेधसा पुरोधसावधाय बुद्धिवृद्धकैस्स-
यौवनन्तु यौवराज्यधूर्वहं व्यधाद्धृवम् ॥ ९ ॥

रक्षायामतिचतुरो नयास्त्रवेत्ता
शिक्षार्हः कपटनृपारिमण्डलस्य ।
पारिल्मेण्टिति विलसन् महासभायां
येड्वर्ड् भूपतिरधिपः कृतस्सुराज्ञया ॥ १० ॥

यौवराज्ये धुरं संवहन्सप्रभू
रञ्जयन् स्वप्रजाभञ्जयन्विद्विषः ।
पालयन्मेदिनीं लीलयात्युज्वलं
श्रेयएत्याहरत् स्वीयमातुःश्रमम् ॥ ११ ॥

सर्वकार्ये भरं निर्वहन्मेदिनी
रक्षणेऽसौ यथाध्यक्षतामाविशत् ।
चक्रवर्तित्वमाक्रम्य राज्ञां स्थितं
राज्यलक्ष्मीः प्रभौ पूज्य एवोत्सुका ॥ १२ ॥

अष्टाशापतिदिव्यमूर्तिसकलैस्सृष्टात्मकोऽसौ प्रभुः
पृष्टाङ्गो नवयौवनोत्कटमदो हृष्टान्तरङ्गो युधि ।
दुष्टान् क्लिष्टनृपव्रजान् भुजबलात् कष्टावहान् ध्वंसयन्
नष्टां क्ष्मामकरोद्वशां जनचयैस्स्पष्टान्तथाष्टापदैः ॥ १३ ॥

विक्टोरियायाः परतोऽत्रराज्या
येड्वेर्ड्प्रभुं वृद्धिमिषिति प्रसिद्धे ।
राष्ट्रेऽभिषिक्तं नवमेऽह्निचागस्ट्
मासेऽपि राज्ञोधिक (१९०२) वत्सरेऽधुः ॥ १४ ॥

हरीन्दिरांघ्रिभक्तिमान् गुरूत्तरीकृतासने
किरीटधारणे तदाधरीकृताखिलप्रभुः ।
दरीकृतस्मितास्यसुन्दरीयुतस्स्वतेजसा
गिरीन्द्रशृङ्गके यथा हरीशयुग्ममाबभौ ॥ १५ ॥

धर्मजाताश्रयो भीमसेनानुगतउज्वलः ।
श्वेतवाहस्तदाजिष्णुर्भाति साक्षात्किरीट्यसौ ॥ १६ ॥

चण्डस्वांशुचयप्रभाकरमहामण्डल्युपान्तोज्वल-
दण्डानन्तपताकहर्म्यनिकरे लण्डन् महापट्टणे ।
घण्टाचारुणिविष्टरे धरणिभृत् षण्डास्थिते सम्भ्रमै-
रण्डाधीशतया प्रभोर्नृपशतैः पट्टाभिषेकः कृतः ॥ १७ ॥

मनुयाज्ञवल्क्यक पराशरोदिता-
स्स्मृतयो निजांग्लपरिभाषया कृताः ।
विषयेषु तत्र गदितोऽर्थसंग्रह-
स्तनुशिक्षणञ्च नियमेन कल्प्यते ॥ १८ ॥

धर्मात् स्यात् पापहानिस्तदपि बहुफलं शाश्वतं पूर्वधर्म-
त्राणादेतद्विदित्वा विविधमतनृपैः पूर्वकैस्स्वानुगुण्यात् ।
क्लप्तान् क्षेत्रार्थरूपान् बहुगुरुमठसत्रादिदेवालये-
भ्यःपूर्णान्नूनान्विधत्तेऽनुपममहिमको धार्मिकोऽसौ महीशः॥१९॥

आरोग्यं दीर्घायुस्सन्ततिसम्पत्कलायशो विभवाः ।
धर्मनृपस्यैधन्ते धर्मे सर्वं प्रतिष्ठितं यस्मात् ॥ २० ॥



राजते स्वयमात्मीयान् यस्माद्रञ्जयति प्रभुः ।
तस्मादुभयतोह्यस्मिन् पर्याप्ता राजता भुवि ॥ २१ ॥
भूदारबाधाधुस्तायामक्षक्रीडा रथेष्वलम् ।
दुर्बलिग्रहणंविष्णु कथायां मत्तता गजे ॥ २२ ॥
उद्वृत्तता काव्यएव ज्याभङ्गोऽरिशरासने ।
पक्षपातः खगेष्वेव यद्राज्ये परतो न हि ॥ २३ ॥

इति गतवति काले भोग्यतोऽस्मत्सुभाग्यात्
पयसिव मधुवृष्टिर्मिरुवद्दन्नवृष्टिः ।
इह भवति सुराज्ञश्छत्रराट्पट्टबन्ध
क्षणइति विचरन्ती काप्यसौ किं वदन्ती ॥ २४ ॥

दुर्गे युद्दुर्योधनकोऽदाद्यमुनान्ते
पार्थायेन्द्रप्रस्थमभूत्तत्पुरमत्र ।
हर्याज्ञाया धर्मसुतोऽथास्मच वंश्या
नीत्याशासन् क्ष्मान्तु नभाण्पूर्वमहीशाः ॥ २५ ॥

या पुरीन्द्रतटनाम्न्यभूत्पुरा धर्मजातरुचिरा वनोदया ।
सास्ति डिल्यभिहितार्कजातटे धर्मजातरुचिरावनोदया ॥ २६ ॥

विक्टोरियाया अपि चक्रवर्ति
पट्टाभिषेकोऽरचि डिल्लिपुर्याम् ।
तथात्र राज्ञः क्रियतेऽद्यभूपै-
स्सचक्रवर्त्याह्वयपट्टबन्धः ॥ २७ ॥

भूभृन्नाथमहोत्सवाय निखिलैस्सार्थैर्महीभृत्कुलै-
रागन्तव्यमितीरिते सति वयं तादृग्विधाइत्यगाः ।
कैलासः कनकाचलो हिमगिरिश्चाम्ये महार्घाः पुरे
तस्थूरत्नहिरण्यगैरिकलसद्राजोपकार्याच्छलात् ॥ २८ ॥

विविधवर्णचलांशुककेतुभि र्मकरतोरणचारुवितानकैः ।
कदलिकाक्रमुकादिमसम्भ्रमैर्नवमिवाजनि तन्नगरन्तदा ॥ २९ ॥

परश्वश्वो भावी स तु बहुमतोऽस्मत्प्रभुमहो
द्रुतं यामो डिल्लीपुरमिति नृपाज्ञापरवशाः ।
परे भूपास्स्वस्वोपहितविरुदाङ्काः परिजनै-
र्गजैरश्वैर्योधैः परिवृततलास्तत्पुरमगुः ॥ ३० ॥

क्षितिमण्डलेश्वर वितीर्णचिह्नकैः
परिचिह्निताः प्रभुनृपाः परश्शतम् ।
विभवानुरूप मुपलालितोत्सवा
व्यरुचन्विचित्र शुभवर्मभूषणाः ॥ ३१ ॥

तपनीयमयैर्महार्हरत्नैः कवचोष्णीपकिरीटकङ्कणाद्यैः ।
उडुभासुरमौक्तिकाढ्यहारैश्शुशुभे भूपकुलं मिथोधिकाभम् ॥३२॥

चतुरङ्गबलैर्नृपप्रभूणां जनताद्यैरितरैर्निरन्तरेऽस्मिन् ।
नगरे विशिखादिचत्वरेऽभूदनवेक्ष्यैव धरागता नृपांसम् ॥ ३३ ॥

बहुभिर्जनराशिभिःपुरे निबिडे सौधगता वधूवराः ।
नृपसेवनतो विमानिनोऽप्सरसश्चाग्रुरिहेति मेनिरे ॥ ३४ ॥

राजाभिषेकादन्वर्थं शुभकृद्वत्सरे प्रभोः ।
चापमासेऽष्टादशाहे चक्रेशाख्योत्सवः कृतः ॥ ३५ ॥

गानैर्धन्ये ( १९०३ ) ऽब्देगुरोर्वारआद्ये-
मास्याद्याहे डिल्लिपुर्यां सुराज्ञः ।
येड्वेर्ड् नाम्नश्चेन्दिया चक्रवर्ती
श्लाघ्याभिख्या पट्टबन्धोत्सवोऽभूत् ॥ ३६ ॥

आस्तेऽखिलक्ष्मानृपहस्तगानृपो
ऽत्राज्ञात्मनाज्ञाप्रतिभूमुखाद्यतः ।



विष्ण्वंशता भूपगता तदंशता
मन्त्रिण्यतो मन्व्यकृतप्रतिप्रभुः ॥ ३७ ॥

अष्टापदमणिपुष्टाद्भुतपुरस्रष्टावधि विधिसृष्टाखिलमहिमण्डली-शिखरखण्डभूरुचिरमण्डनोल्लसति लण्डनाख्यपुरवरउदधिदहनतरणिसमवित नियतमहिमनि वसत उदयिनः । धृष्टस्थिरतरराष्ट्रप्रभुवरवृष्णिकुलभव येड्वेर्ड् क्षितिपतिशेखरस्य धृतलेखनायकमयूखशङ्खमुखलेखनस्य गनधिक ( १९०३ ) शरदि जनवरिमुखदिन इनपदगतगृहनिगमनिकरजुषि । मल्यादिमबहुवल्याद्दततरु कुल्याहितरुचि डिल्यां पुरि परिकर्शितारिसुविमर्शवान् धरणिकात्स्न्र्यपोऽतिधनकर्सनाख्य उपनृपतिरथनिजनियमननिहितनिरवधिधन नृपतिशतपरिवृतः । स्वर्मान्यशुभसुधर्माभसदसि धर्मात्मजगतभर्मासन उरुविक्रमार्जितसुचक्रवालनृपतिक्रमार्ह गुरुचक्रवर्तिपदघटित मणिमयमकुटद्युतिमहिमकृतबहुमहितत विभवशतैः ॥ ३८ ॥

श्रीमान् लार्ड् कर्सनाख्यः प्रतिनिधिरधिपस्येन्दियाध्यक्षभूतो
ड्यूगःप् कानाडभिख्यः क्षितिभृदवरजोलण्डनुर्व्या इहेतः ।
तत्पश्चात् षष्टिभूपा अपिबहुकरदाः पृष्टतोन्येप्यमात्या-
नागारूढाश्च डिल्यां पुरि बहुविभवैर्वाद्यघोषैर्विचेरुः ॥ ३९ ॥

प्रविश्य बहुमानतः प्रतिनिधिप्रधाना अमी
मयाद्दतसभान्तरे जितसुधर्मणि श्लाघिते ।
युधिष्ठिरपरिष्ठिते कनकरत्नसिंहासने
ससम्भ्रममहैर्व्यधुः प्रभुमथेन्दियाचक्रपम् ॥ ४० ॥

धर्मात्मजेति निजशर्मावसत् सुकृतकर्माद्यडिल्यभिहिते
घर्माभिहृद्विपुलहर्म्याकुलीकृत स्वमर्मान्तरे हरितटे ।
स्वर्मानितेऽत्रमयनिर्माणवत्सदसि भर्मासनेऽग्र्यनृपवत्
दुर्मानहारिणि शुभोर्मावसौ प्रतिनिधिर्मानितो नृपशतैः ॥ ४१ ॥

सुरपतिं वसतो मरुतो गुरू रघुपतिश्च वसिष्ठमुखान्नृपाः ।
अभिषिचुश्चतुरङ्गबलान्विताः प्रभुमिमश्च तथायुतभूमिपाः ॥ ४२॥
दुन्दुभ्याद्यैर्वाद्यैरुत्तमनृत्तैः प्रभूतगीतैश्च ।
अन्यादृशविन्यासो ऽजन्यक्षीणाग्निचूर्णबाणगणैः ॥ ४३ ॥
धरण्यां सर्वत्रोज्वलबहुलदीपावलिशतै
र्हृताभेनक्षत्रग्रहनिकरके तत्र रजनौ ।
धराभूतद्युक्तं वियदिह शचीन्द्रौ ह्यधिगता-
बलक्सान्ड्रा येड्वर्ड् कुशलतनुतां भूम्यवनतः॥ ४४ ॥
प्रथुलगभीरभूतनलिकध्वनयोऽध्वगता
दिशिविदिशीममाहुरवनीश शुभप्रभवम् ।
भ्रमदसिताभ्रमण्डलमतीत्यच वाणगणा
दहनमयोदयाः पटपटध्वनयस्त्रिदिवे ॥ ४५ ॥
भीमपुरस्सरैरवरजै र्जगदपि च जयन्
भूरि वितीर्य चाहृतधनं बहु विबुधजनततये ।
अद्भुतराजसूयकमखं चरति यमसुतकुरुपे
डिल्लिपुरी यथास्ति च तथाद्यनृपवरमहे ॥ ४६ ॥
तदा तत्र पुर्यां यआसीद्विशेषः कदा कुत्रचासौ नदृष्टः श्रुतश्च ।
तदुक्तौ न शक्तिर्ममास्तेफणीशस्सहस्रास्यतद्युग्मजिह्वायुतोऽलम् ॥
तत्र पुरक्ष्मा सफलागमसद्द्विजराजकालिरवगम्या ।
भाति वनक्ष्मासफलागमसद्विजराजकालिरवगम्या ॥ ४८ ॥
पूर्वं क्षोण्यां भरतशकले पाण्ड्यचोलाङ्गपूर्वाः
षट्पञ्चाशद्बहुलविषयाः खण्डशो भिन्नभिन्नाः ।
निर्जित्यैतान्निखिलविषयान्निस्सपत्नैकराज्ये
सेव्यश्रीमानपि नृपशतैरेम्प्ररा पिन्दियास्ते ॥ ४९ ॥
यदुरुप्रतापदहनात्पराजितो विषयाद्बहिर्भावितुमातुरो रविः ।
झटितिप्रधावितहयोऽप्यनीश्वरस्सततं सहस्रकरएति यत्पदम् ॥

## ॥ चक्रवर्तिजयम् ॥

( पूर्वप्रकाशितात्परम् )

श्वेतामृतप्रभः पूर्णकलोराजातिरञ्जकः ।
यथा दिव्येकएवास्ते तथासौ भुवि निर्मितः ॥ ५१ ॥

त्यक्त्वा जनाः स्वे राजानं क्षितिचक्रेशतापदम् ।
अद्याद्रियन्ते राजानं क्षितिचक्रेशतापदम् ॥ ५२ ॥

श्वेतोऽपि कृष्णानुरक्तस्सशिवोऽपि सुचक्रभृत् ।
अपिक्ष्माभृत्पक्षपाती येड्वर्ड् सप्तमराडसौ ॥ ५३ ॥

श्रीमांश्चक्रधरोलोक रक्षको भूमिनायकः ।
विष्णुरेवास्ति येड्वर्ड् यन्नाविष्णुः पृथिवीपतिः ॥ ५४॥

मन्ये चन्द्रमिवामलं समधियं खेलत्सुकीर्तिं भुवि
प्रत्याक्रम्य धनादिकं प्रमथनादाकृष्टराजन्यकम् ।
रक्षावर्धितचर्चिकाश्च महिषीमेतौ व्यपायन्नये
येड्वर्ण्णाममहाप्रभुंचरमया विष्ण्वंशकं भूतये ॥ ५५ ॥

राज्येऽस्मिन् बहवो लसन्ति हि मठास्सत्राणि देवालया-
स्तेभ्यो भूमिनिबन्धनादिमधिकं दत्वा मुदापात्यसौ ।
तेष्वेतद्बहुपुण्यभाजनमहो तोदाद्रिनामस्थलं
तत्रास्ते भगवान् श्रितावनपरस्तोदाद्रिनाथो हरिः ॥ ५६ ॥

पाण्ड्यभुवि ताम्रवर्ण्या दक्षिणभागे द्वियोजनेऽस्त्येतत् ।
क्षेत्रं कन्याम्भोधेर्वायव्ये च त्रियोजनतः ॥ ५७ ॥

क्षेत्रेऽस्त्यत्र मठोरमाजननभूः पूर्वार्यवंशानुगः
श्रीवानाचलयोगिनां गुणवतां क्षोणीगुरूणां सताम् ।

राजत्यत्र परम्पराप्तभगवच्छ्रीकार्यनिष्ठस्सदा
श्रीभट्टेश्वरनामको मुनिवरश्शान्तो महात्मा सुधीः ॥५८॥

स्वयं व्यक्ते तोदाद्यभिहिततले श्रीमतिमठे
चतुर्विंशे पट्टे स जयति हि भट्टेशमुनिराट् ।
श्रियो जन्मस्थानं वसतिमपि कीर्तेश्शुभपदं
विरक्ते विद्याया विहिततलमाहुर्यमखिलाः ॥५९॥

दैवालयस्य यद्रौप्यं राजगेहे प्रदीयते ।
तस्याधिकसहस्रेभ्यः क्रियन्ते ह्युत्सवादयः ॥६०॥

मठस्य यद्भूमिनिबन्धजातं प्राप्तं तदुद्भूतफलैस्तथार्थैः ।
शिष्यार्पितैर्भूसुरपूर्वकाणां भुक्त्यादिधर्मो बहुरेधतेऽत्र ॥६१॥

श्रुतिधननिगमान्ततर्कपूर्व श्रुतरसाविभ्यउदारआगतेभ्यः ।
मुनिवर इह पण्डितेभ्य उच्चैरनुगुणमर्थमयाविकादि दत्ते ॥६२॥

अस्तां विस्तरेण । प्रकृताथोऽधिक्रियतान्नाम् ॥

इदानींतु अश्वादिबल धूतारिविश्वाधीशाभिषेचने ।
विश्वादिशायिमुनिना विश्वासादिदंमाहृतम् ॥६३॥

रंभाः परं भावुकभा निबद्धाः ध्वजाश्च साध्वध्वसुवीथिकासु ।
रङ्गावलिर्मांगलिकास्सुलिङ्गा तदा निदध्वानगभीरभेरी ॥६४॥

तैलक्षीरोदकपरिमलद्रव्यजातौषधाद्यौ
स्तोदाद्रीशं सह कमलया सोऽभिषिच्यार्यवर्यः ।
पुष्पैर्वस्त्राभरण निकरैर्भूषयित्वान्नमुख्यै-
स्सन्नैवेद्यै रकुरुत महं साधुसम्राण्महाहे ॥६५॥



वानाद्रिस्थलवासि विप्रामुखसन्नानाप्रभूणां तथादीना-
नामपि चान्नदान मनघं मानादिकं कल्पितम् ।
आनाकोज्वलकीर्तिनार्यमुनिना ज्ञानाधिकश्रेयसा
भूनाथस्य महाभिषेकसमये पीनातिविश्वासतः ॥६६॥

दैवालये गुरुमठे चत्त्वरेषु गृहेषु च ।
रथ्यासु राजभवनेऽप्युज्वला दीपिकाः कृताः ॥६७॥

गीतसुनृत्तैर्वाद्यनिनादै रुज्वलबाणालीनलिकोत्थैः ।
घोषविशेषै स्संभ्रमजातैः पौरजनौघैर्मोदमवापे ॥६८॥

एतत्सर्वं क्षणिकममुना नालमेवं विदित्वा
योगीशास्यां पुरि नृपयशश्शाश्वतज्ञापकाय ।
श्रीमद्विष्ण्वालय मुखतले तोरणद्वारमुच्चै
श्चिह्नं नूत्नं प्रभुमहदिने कर्तुमारभ्यते हि ॥६९॥

गीर्वाणनागरान्ध्रद्रविडांग्लेयादि वर्णभाषारूपैः ।
पुस्तकजातैः पुष्टा पुस्तकशाला क्रियत सह सदुपकृतये ॥७०

महाघहरणक्षम श्रुतनिगूढ सारार्थ युक्तसवर्ण-
निधिकोशसङ्ग्रहनमाहृतं सज्जनैः ।
नृपोत्सवदिने तदा पुर इहाद्यचारभ्यते
सदा क्षरनिधिर्हिनः करगतरो नृपानुग्रहात ॥७१॥

राडभिषेक ज्ञापक हेतोर्भट्टवराख्य श्रीमुनिकल्प्यौ ।
पुस्तकशाला तोरणसौधौ यौ तदुदन्तस्यादुपरिष्टाद ॥७२॥

तद्वज्जूबिलिमहे राज्ञ्या राजश्च पट्टबन्धमहे ।
यद्यत्कृतं पुराभूच्छतगुणितं चक्रवर्तिपट्टमहे ॥७३॥

॥ आशीर्वादः ॥

जीयादेड्वेर्ड्सेवन्त्स प्रभुशिखरमणिस्त्विन्दियाचक्रवर्ती
नित्य श्रीर्निर्जितारिश्शत गुणितवयारंजकस्सन् प्रजानां ।
षष्ठ्यब्दैः क्ष्माभिरक्षा जनितबहुमतिर्यातु विक्टोरियासीत्
माता चक्रेश्वरी भूपतिशत विनता तुल्य वृत्तिस्तयास्ताम् ॥

तैलाभिषेकार्द्रितचित्ततोत शैलाधिपस्याब्धि सुताप्रियस्य ।
लीलाकटाक्षादिह भूभृदेड्वेर्ड् शीलान्वितः पालयतां चिरं क्ष्माम्
स्वस्ति येड्वेर्ड् महीशाय स्वस्ति तद्बान्धवालये
स्वस्ति तद्राज्यरक्षायै स्वस्ति तत्क्ष्माखिलात्मने ॥ ७६ ॥

भृत्यभूत प्रभुस्तुत्यसत्मा
इवैस्सत्यवाग्योगिभिर्मर्त्यलोकार्यकैः ।
क्षित्यधीशश्चिरं चेत्य विद् जयं
नित्यमव्यात् क्षमामित्यलं प्रार्थ्यते ॥ ७७ ॥

चक्रिक्रम भट्टवरानु ग्रहपूर्ति प्रबोधवानाद्रेः ।
सुजनिकवने बुधेष्टं यच्छतु येड्वेर्ड् सुनाथमहिमशकम् ॥ ७८ ॥

॥ श्रीचक्रवर्तिजयं संपूर्णम् ॥

॥ शुभमस्तु ॥

---

॥ श्रीः ॥

॥ गुरुभ्योनमः ॥

# ॥ सुहृद्विलापः ॥

अहह क्षणभङ्गुरं वपुः भवितव्यं बलवत्प्रतिष्ठितम् ।
असुखं सुखमित्यपि द्वयं सहजं सत्त्ववतामिति स्थितम् ॥ १ ॥

गहना गुणहीनता भृशं सुजनानां विरहः सुदुः सहः ।
असदेव जगन्महात्मानां निजलीलागृहसौधसन्निभम् ॥ २ ॥

इह तस्य हरेर्महात्मनः जनि रक्षाक्षयवृत्तिषु स्वतः ।
परमेष्ठिनि कीटकेऽपि वा न हि पक्षप्रतिपक्षताक्रमः ॥ ३ ॥

परमं यश एव देहिनां परलोके सुखसाधनं भवेत् ।
परपत्थ्यमजानाता निजा सुकृतानां सरणिर्निवार्यते ॥ ४ ॥

परया निजयत्नसम्पदा परिलब्धं धनसञ्चयं सुधीः ।
परिरक्षितु मर्थिनां सता मुपकुर्यात् परमादरेणवै ॥ ५ ॥

अयमत्र निदर्शनं सतामवतंसः सुधियामधीश्वरः ।
अतिमानुषचित्र कार्मणो "रविवर्मा" गुणशेवधिर्नृपः ॥ ६ ॥

अयमार्तजनावनव्रतः "शुखसारङ्ग पुरेश्वरोत्तमः" ।
"रविराडिति" नाममात्रतः सुधया मूर्धनि सिञ्चतीवनः ॥

अविनाशियशः शरीरगोमहतामेष महीभृतां सदः ।
परिभूषयति प्रशान्तधीः परमेशीपदपङ्कजाश्रयः ॥ ८ ॥

प्रतिगेहमिहार्यभारते प्रतिमाव्याजमुपेत्य यद्यशः ।
प्रणमज्जन भाग्यसम्पदं परिपोषं नयतीति विश्रुतम् ॥ ९ ॥

क्षणमप्यमुना सहैव यः सहवासं कुरुते स पुण्यवान् ।
क्व पुनः सुरसिन्धुसङ्गमे रमतां निर्घृणुतां मनागपि ॥ १० ॥

अतिपेलवमाधुरीधुरा रचितानां प्रणयप्रथाजुषम् ।
वचसामनुरूपयामुना निजवृत्या त्रिजगद्वशीकृतम् ॥ ११ ॥

गुणवानयमेक एव सन्नखिलानां हृदयङ्गमोऽभवत् ।
परितः प्रतिविग्रहं गुणैः परमात्मा प्रतिबिम्बितो यथा ॥१२॥

सुखिनां परदुःखवेदिता यदिचेदस्य परं विलोक्यते ।
करुणारस पूरितात्मनामयमेको धुरि विश्ववेदिनाम् ॥ १३ ॥

उभयेन करांबुजेन यो युगपच्चित्रविलेखन क्षमः ।
महता खलु "सव्यसाचिना" सुगृहीतेन पदेन शब्दितः ॥१४॥

अखिलैरपि हूणपुङ्गवैरयमिन्ध्यातिलकत्वसूचकैः ।
बिरुदैर्बहुमानितो भृशं महनीये प्रभुसंसदि कचित् ॥ १५ ॥

अधुनापि यदीयविभ्रमाः परितो "भारत" पौरुषप्रदाः ।
प्रचलन्ति महान्तरीपतः सुधियां वेश्मसु सत्कृताभृशम् ॥ १६॥

असकृत्खलु कोविदैर्वरैरवकीर्णे सदसि स्थितोह्ययम् ।
विविधैरपि चारुभाषणैरतिमोदं तनुतेस्म नश्चिरात् ॥ १७ ॥

अधुना तु विधेर्विपर्ययात् परलोकं गमितो दुरत्ययैः ।
परिदेवनसागरान्तरे क्षिपति स्म श्रममन्तरा सनः ॥ १८ ॥

स्मरण क्षणमेव ये गुणाः मुदमव्याजमुपानयन् मनः ।
अधुना खलु कालभेदतो विरहाधिं हृदि वर्धयन्ति ते ॥१९॥

गुणवत्स्वपि कालगोचरं गतवत्सु प्रणयातिरेकतः ।
करुणैः परिदेवितैरलं रुदतामप्यथ निर्वृतिः कुतः ॥ २० ॥

अथवा सुहृदां वियोगतः तपतां तद्गुणवर्णनोदिता ।
महती परमश्रुवाहिनी शमयत्याविलमन्तरं शनैः ॥ २१ ॥



अयि विश्रुत! राजशेखर! त्वयि कानः प्रतिपत्तिरुच्यते ।
यदितः खलु दूरतोगतं सुहृदं त्वां न हि सेवितुं क्षमाः ॥ २२ ॥
(वयमितिशेषः)

अखिलानपि ते सुहृद्गणा ननुकूलाचरण क्षमानपि ।
किमकारणमार्त्तविह्वलानतनोर्यः श्रितवत्सलोऽपिसन् ॥ २३ ॥

सहजामपि धीरतां जवादपहाय त्वयि सक्तचेतसः ।
विलपन्ति महीभृतो गुणैरवबद्धाः शुकशावका इव ॥ २४ ॥

"दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने" ।
(इदं कुमारसंभवे)

इति यद्धृतमाचरत्भवान् तदहो विस्मृतवान् कथं क्षणात् ॥ २५ ॥

मधुरैरुपगीतितानकैः रतिमुग्धं पुरमण्डनञ्च यत् ।
तदिदं तन सौधमण्डलं कथमार्त्तैर्निनदैः प्रपूर्यते ॥ २६ ॥

अविचारितपूर्वमेवते तिलमिश्रे सलिलञ्जलौ रतिः ।
अभिशापइवाद भूदहो गहनोऽयं भुवि सत्वविप्लवः ॥ २७ ॥

करुणालवमन्तरा तव स्वजनेषु द्विषता दुरात्मना ।
विधिना कृतमत्र वैशसंकमकाण्डे विनिपातयेत् न तत् ॥ २८ ॥

अतिकोमळमश्रमध्यतो निजचेटीजनवीजनादिभिः ।
उपलाळितमेव ते वपुः कथमग्रे चितया निरीक्ष्यते ॥ २९ ॥

आविषह्य वियोग वेदना परितप्तांस्तव बान्धवानमून् ।
अयि! सान्त्वय साम्प्रतं शनैः प्रतिबोध प्रियदर्शन! प्रभो! ॥

नयनान्त विलोकनैः सकृत् जनमेनं प्रतिपत्तिनिष्ठुरम् ।
सुखयाशु सुधावधीरितैः प्रणयार्द्रैः प्रियभाषणैरपि ॥ ३१ ॥

त्वरयत्ययमाकुले भवद्भागिनी लोचन चन्द्रिका कृतिः ।
दयसे न किमादरेण हा विपरीता विधिचोदना तुनः ॥ ३२ ॥

अहमस्मि स ते पदांबुज प्रणतेषु प्रथमः सुहृत्तमः ।
ननु पश्यसि किं न वेत्सिमां ? पुरतः सन्निहितोप्य शक्तितः ॥३३॥
गतएत्र कथं, न भाषसे, रविराज ? प्रतिपन्नचेतनः ।
अथवा गुणवत्यपि कचित्, विपरीता नृपजातिरीक्ष्यते ॥ ३४ ॥
किमिदं, मम चित्तविभ्रमः, सविधेनो नृपतिर्नबान्धवाः ।
अधुना दिवमेत्य तस्य वैदिनषट्कं क्षणवद्व्यपोहितम् ॥ ३५ ॥
मरणं नियतं हि देहिनां, ननु तस्य प्रथिता प्रतिक्रिया ।
प्रतिवासरमाशु जन्तवो, बहवो यान्ति समापतन्ति च ॥ ३६ ॥
प्रतिदेहमवस्थितः सदा, सहि मृत्युर्विवृताननान्तरः ।
अभिकांक्षति देहिनाक्षणं, कबलीकर्त्तुमनन्यमानसः ॥ ३७ ॥
स्वकृतस्य हि कर्मणः फलान्यनुभोक्तुं कृतनिश्चयः पुमान् ।
जनिपञ्जरमाविशत्यतः कृतकर्मक्षय एव तत्क्षयः ॥ ३८ ॥
कति सोदरबान्धवागताः, कतिवा मातृजनाः, सुताः कति ।
परिवर्तिनि कालयन्त्रिते, भवचक्रेऽनुवास्थिरा स्थितिः ॥ ३९ ॥
"प्रथमे वयसि स्थितो मम, प्रियपुत्रो मृत" इत्यनारतम् ।
अनुशोचनतत्परेष्विया "नुपकर्त्तागत" इत्यहो भ्रमः ॥ ४० ॥
सुहृदां गुणशालिनामितः स्मरणेन स्वयमेव जन्तुषु ।
शतधाधृतिभेदिनो हठात्, प्रवहन्त्यश्रुकणाः स्फुटं बहिः ॥ ४१ ॥
तदपि प्रतिपन्नचेतसामिदमाक्षेपकरं विदुर्बुधाः ।
तदलं विरमामिसाम्प्रतं परिचिन्त्य क्षणमात्रजीवितम् ॥ ४२ ॥
परितापशरीरशोषणप्रभृतीनां परमापदां पदात् ।
कृपयाननु देव! भूयसो भवरोगात् जगदीश! पाहिमाम् ॥४३॥

॥ इति सर्वं शिवम् ॥

---

॥ ओं ॥

शिवेपाहि ।

# ॥ दुर्गाचन्द्रकलास्तुतिः ॥

वेधोहरीश्वरस्तुत्यां विहर्त्रीं विन्ध्यभूधरे ।
हरप्राणेश्वरीं वन्दे हन्त्रीं त्रिपुरविद्विषाम् ॥ १ ॥

श्रीदेवीमाहात्म्यवराहपुराणहरिवंशभागवतादिप्रतिपन्नदेवीमहिमसञ्जिघृक्षया इदं स्तोत्रमारिप्सितं । तत्र । सावर्णिस्सूर्यतनयो यो मनुः कथ्यतेऽष्टमः । निशामयत तदुत्पत्तिं विस्तराद्गदतो मम । इति देवीमाहात्म्यस्य प्रथमश्लोके भुवनेश्वरीमन्त्रमुद्धार्यं विवक्षितं व्याचक्षते तद्यथा यो यकारस्याष्टमोहकारः तस्य विशेषणं सूर्यतनयः अग्निः तेजस्वित्वेन तन्नेदिष्ठत्वात् तेन तद्बीजं रेफो लभ्यते तद्वत्वं हकारस्य पुनर्लक्षणयोच्यते सवर्णा लोहितशुक्लकृष्णवर्णसहिता प्रकृतिः तस्यापत्यवत्तत्सम्बधी तद्वाचक ईकारः इहापि तद्वत्वं लक्षणयोच्यते एवं रेफेण ईकारेण च युक्तो हकारात्मको मनुर्मन्त्रः तत्प्रतिपाद्यदेवता कथ्यते तस्याः मन्त्रतत्प्रतिपाद्यदेवताया उत्पत्तिं निशामयेति सम्बन्धः मन्त्रस्याग्रिमो बिन्दुस्तु श्लोके स्वरूपत एव निवेशित इति तां शैलीमनुसृत्यात्रापि श्लोके तस्य मन्त्रस्योद्धारः पादचतुष्टयेऽपि कार्यो विवक्षितः अत्रानुलोम्येनैव हकारादीनामुच्चारः वेधःकृता देवीस्तुतिर्देवीमहात्म्ये प्रसिद्धा हरिकृता हरिवंशे ईश्वरकृता वराहपुराणे ॥१॥

अभ्यर्थनेन सरसीरुहसम्भवस्य
त्यक्त्वोदिता भगवदक्षिपिधानलीलाम् ।
विश्वेश्वरी विपदपागमने पुरस्ता-
न्माता ममास्तु मधुकैटभयोर्निहन्त्री ॥ २ ॥

अनेन श्लोकेन देवीमाहात्म्यस्य प्रथमाध्यायेन प्रतिपादितं मधुकैटभवधरूपं देव्याः प्रथमचरितं संगृहीतं भगवत्कृतेऽपि मधुकैटभवधे माणवक-

कर्तृके आचार्येण कार्यमाणे ऽध्ययने कारीषाग्नेरिव तत्सामर्थ्याचरणेन साक्षात्तत्तत्प्रेरणेन च देव्याः प्रेरकत्वमस्तीमि मधुकैटभयोर्निहन्त्रीत्युक्तं देवी हरिं प्रति बोधं नीत्वा मधुकैटभयोर्वधे समर्थं कृतवती तस्य तयोर्वधे भावश्चोत्पादितवतीति देवीमाहात्म्ये ब्रह्मस्तुतिगताद्वचनात् ज्ञायते । प्रबोधञ्च जगत्स्वामी नीयतामच्युतो लघु । बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ । इति अक्षिपिधानलीलामित्यनेन भगवतो योगनिद्रान्येषां निद्रेवमोहपारवश्यापादिनी न भवति । किन्तु लीलया सखीव लोचनपिधानमात्रं करोतीति दर्शितं तदुक्तं हरिवंशे । याप्येषा गह्वरी माया निद्रेति जगति स्थिता । सा कर्मान्वेषिणी घोरा काळरात्री महीपते । अस्यास्तनुस्तमोद्वारा निशादिवसनाशिनी । जीविताईहरी घोरा सर्वप्राणभृतां भुवि । नैतया कश्चिदाविष्टो जृम्भमाणो मुहुर्मुहुः । शक्तः प्रसहितुं वेगं मज्जन्निव महार्णवे । अन्नजा भुवि मर्त्यानां श्रमजा वा कथञ्चन । नैशा भवति लोकस्य निद्रा सर्वस्य लौकिकी । सुप्तान्ते क्षीयते ह्येषा प्रायशो भुवि देहिनां । मृत्युकालाभिभूतानां प्राणान् स्वापयते भृशं । देवेष्वपि दधारैनां नान्यो नारायणादृते । सखी सार्वरहस्येषा माया विष्णोश्शरीरजा । सैषा नारायणमुखे दृष्टा कमललोचना । लोकानल्पेन कालेन भजते भृशमोहिनी । इति ॥२॥

**प्राङ्निर्जरेषु निहितैर्निजशक्तिलेशै-**
**रेकीभवद्भिरुदिताखिललोकगुप्त्यै ।**
**संपन्नशस्त्रनिकरा च तदायुधस्थै-**
**र्माता ममास्तु महिषान्तकरी पुरस्तात् ॥ ३ ॥**

अनेन श्लोकेन द्वितीयादिभिस्त्रिभिरध्यायै प्रतिपादितं देव्या मध्यमचरितं सङ्गृहीतं । अत्र यद्यपि द्वितीयेऽध्याये ब्रह्मविष्णुशिवानामिन्द्रादीनाञ्च शरीरान्निष्क्रान्तन्तेजस्सर्वं देवीविग्रहरूपेणाभिव्यक्तमासीदित्येतावदेवोक्तं देव्याश्च शूलादीन्यायुधानि देवैस्स्वस्वशूलेभ्यो विनिर्गमय्य दत्तानीत्येवोक्तं तथाप्युत्तरचरित्रगतवचनान्तरपर्यालोचनया देव्याश्शक्त्यंशा एव तत्तद्देव-



पालनीयैकदेशपालनशक्तित्वेन देव्या निवेशिताः त एव महिषासुरवधेन सर्वलोकसंरक्षणार्थं विहिताः एवन्तदायुधनिवेशितनिजशक्त्यंशा अपीति ज्ञायते तत्र हि । ब्रह्मेशगुहविष्णूनां तथैवेन्द्रस्य शक्तयः । शरीरेभ्यो विनिष्क्रम्य तद्रूपाश्चण्डिकां ययुः । यस्य देवस्य यद्रूपं भूषणं वाहनं यथा । तद्वदेव हि तच्छक्तिरसुरान्योद्धुमाययौ । इत्यादिना ब्रह्मादिशरीरनिर्गताभिः ब्राह्मयादिशक्तिभिरपि युद्धमुपक्रम्य । बलावलेपाद्दुष्टे त्वं मा दुर्गे गर्वमावह । अन्यासां बलमाश्रित्य युध्यसेत्वतिमानिनि । इति सुम्भेनोक्ते देव्या वचनमाम्नायते । एकैवाहं जगत्यत्र द्वितीया का ममापरा । पश्यतां दुष्ट मय्येव विशन्त्यो मद्विभूतयः । इति । ततस्समस्तास्ता देव्यो ब्रह्माणी प्रमुखा लयं । तस्या देव्यास्तथा जग्मुरेकैवासीत्तदम्बिका । इत्युक्त्वा पुनर्देवीवचनमाम्नायते । अहं विभूत्या बहुभिरिह रूपैर्यदा स्थिता । तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरोभव । इति ॥ ३ ॥

**प्रालेयशैलतनयातनुकान्तिसम्प-**
**त्कोशोदिता कुवलयच्छविचारुदेहा ।**
**नारायणीनमदभीप्सितकल्पवल्ली**
**सुप्रीतिमावहतु सुम्भनिसुम्भहन्त्री ॥ ४ ॥**

अनेन श्लोकेन पञ्चमाध्यायप्रभृतिभिष्षड्भिरध्यायैः प्रतिपादितस्य सभृत्यबान्धवसुम्भनिसुम्भवधरूपस्य देव्या उत्तरचरितस्यार्थस्संगृहीतः । देवीमाहात्म्ये सुम्भनिसुम्भहन्त्री कौशिकी सिद्धवत्कृत्य वर्णिता विशिष्य तदाविर्भावो न वर्णितः । स तु शिवपुराणे वायुसंहितायां वर्णितः । तत्र हि । दैत्यौ सुम्भनिसुम्भाख्यौ भ्रातरौ तौ बभूवतुः । ताभ्यां तपोबलाद्दत्तं ब्रह्मणा परमेष्ठिना । अवध्यत्वं जगत्यस्मिन्पुरुषैरखिलैरपि । अयोनिजा तु या कन्या स्त्र्यङ्गकोशसमुद्भवा । अजातपुंस्पर्शरतिरतिलङ्घ्यपराक्रमा । तयास्तु नौ वधस्संख्ये तस्यां कामाभिभूतयोः । इति चाभ्यर्थितो ब्रह्मा ताभ्यां प्राह तथास्त्विति । ततःप्रभृति शक्रादीन्विजित्वा समरे सुरान् । निस्वाध्याय-

वषट्कारं जगच्चक्रतुरक्रमात् । तयोर्लयाय देवेशं ब्रह्मा प्रार्थितवान्पुनः । विनिन्द्यापि रहस्यम्बां क्रोधयित्वा यथा तथा । तद्वर्णकोशजां शक्तिमकामां कन्यकात्मिकाम् । निसुम्भसुम्भयोर्हन्त्रीं सुरेभ्यो दातुमर्हसि । इत्थमभ्यर्थितो धात्रा भगवान्नीललोहितः । काळीत्याह रहस्यम्बां निन्दयन्निव सस्मितः । इति प्रक्रम्य । वाचा नभिरता भर्तुरपि सर्वाङ्गसुन्दरी । सा वृथैवाभिजायेत सर्वैरपि गुणोत्तरैः । भर्तृभोगैकशेषा हि सर्ग एवैष योषिताम् । तथा सत्यन्यथा भूता नारी कुत्रोपयुज्यते । इत्यादि देवीवचनमुपन्यस्य क्रीडार्थं काळीत्युक्तमिति देवेनोक्ते । भूयसीव तवाप्रीतिरगौरमिति मे वपुः । क्रीडोक्तीरपि काळीति घटते कथमन्यथा । इति । पुनर्देवीवचनमुपन्यस्य कथञ्चिद्देवस्यानुज्ञया देवीगतमाश्रमं प्राप्य कञ्चित्कालं तपश्चरित्वा रजोगुणाधिपाद्ब्रह्मणो देवी गौररूपं प्राप्य नीलरूपकोशमुत्सृष्टवती ततः कोशादुद्भूता कौशिकीत्युक्तम् । तत्कोशं सहसोत्सृज्य गौरी सा समजायत । तत्कोशादात्मनोत्सृष्टात्कौशिकी नाम नामतः । काळी काळाम्बुदप्रख्या कन्यका समपद्यत । सा तु मायात्मिका शक्तिर्योगनिद्रा तु वैष्णवी । शङ्खचक्रत्रिशूलादि सायुधाष्टमहाभुजा । सौम्या घोरा च मिश्रा च त्रिणेत्रा चन्द्रशेखरा । अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी । इति । प्रत्यागतया देव्या देवं प्रति कौशिकीमहिमा कथित इति च तत्रैवोक्तम् । किं देवेन न सा दृष्टा या सृष्टा कौशिकी मया । तादृशी कन्यका लोके न भूता न भविष्यति । तस्या वीर्यं बलं विन्ध्ये निलयं विजयं तथा । सुम्भस्य च निशुम्भस्य मारणञ्च रणे तया । प्रत्यक्षफलदानञ्च लोकाय भजते सदा । देवानां रक्षणञ्चैव ब्रह्मा विज्ञापयिष्यति । इति ॥ ४ ॥

**विश्वेश्वरीति महिषान्तकरीति यस्या-**
**नारायणीत्यपि च नामभिरङ्कितानि ।**
**सूक्तानि पङ्कजभुवा च सुरर्षिभिश्च**
**दृष्टानि पावकमुखैश्च शिवां भजेताम् ॥ ५ ॥**



प्रथमाध्याये ब्रह्मणा कृतं स्तोत्रं तेन दृष्टं तत् । विश्वेश्वरीं जगद्धात्रीं इति विश्वेश्वरीनाम्नोपक्रमात् चतुर्थाध्याये यत् स्तोत्रं महिषासुरवधानन्तरं देवैरिन्द्रादिभिः कृतं तद्देवैर्महर्षिभिश्च दृष्टम् । देव्या यया ततमिदं जगदात्मशक्त्या निश्शेषदेवगणशक्तिसमूहमूर्त्या । तामम्बिकामखिलदेवमहर्षिपूज्याम् । इति स्तोत्रप्रथमश्लोके ऽखिलदेवमहर्षिपूज्यत्वविशेषणात् । ततस्सुरगणास्सर्वे देव्या इन्द्रपुरोगमाः । स्तुतिमारेभिरे कर्तुं निहते महिषासुरे । इति स्तोत्रोपक्रमे तत्र देवान् प्रति स्तोत्रत्रयफलप्रतिपादके देवीवचने । युष्माभिस्तु तयो याश्च याश्च ब्रह्मर्षिभिः कृताः । ब्रह्मणा च कृता याश्च प्रयच्छन्ति शुभां गतिम् । इति ब्रह्मर्षीणां स्तुतिकर्तृत्वस्य च प्रतिपादनाच्च तन्महिषान्तकरीसूक्तं सुम्भवधानन्तरमेकादशाध्याये । देव्या हते तत्र महासुरेन्द्रे सेन्द्रास्सुरा वह्निपुरोगमास्ताम् । कात्यायनीं तुष्टुवुरिष्टलाभाद्विकासिवक्त्राब्जविकाशिताशाः । इति । देवि प्रपन्नार्तिहरे प्रसीद । इत्यादि यदग्निप्रमुखैर्देवैः कृतं स्तोत्रन्तैरेव दृष्टं तन्नारायणीसूक्तं तत्र । नारायणि नमोऽस्तु ते । इति बहुधाभ्यासात् त्रीण्यप्येतानि स्तोत्राणि अकृतकानादिस्तोत्ररूपाणि ब्रह्मादिभिर्दृष्टानि परन्नकृतैः कृतानीत्येतदग्रिमपाञ्चरात्रवचनोदाहरणेन स्पष्टीभविष्यति ॥ ५ ॥

**उत्पत्तिदैत्यहननस्तवनात्मकानि**
**संरक्षकाण्यखिलभूतहिताय यस्याः ।**
**सूक्तान्यशेषनिगमान्तविदः पठन्ति**
**तां विश्वमातरमजस्रमभिष्टवीमि ॥ ६ ॥**

प्रथममध्यमोत्तरेषु त्रिष्वपि चरितेषु देव्या आविर्भावो दैत्यहननं स्तवनं चेति त्रयमाम्नायितम् । अतस्त्रीण्यपि प्रत्येकं त्रितयात्मकानि एतानि सर्वात्मना सर्वेषां संरक्षकाणीत्येतदेकादशाध्याये देव्यैव देवान् प्रति महता प्रपञ्चेन प्रतिपादितं तानि लोकरक्षणार्थं ब्रह्मविदः पठन्तीत्येतदग्रिमपांचरात्रवचनोदाहरणेन स्फुटीभविष्यति ॥ ६ ॥

यें वैप्रचित्तपुनरुत्थितसुंभमुख्यै-
दुर्भिक्षघोरसमयेन च कारितासु ।
आविष्कृतास्त्रिजगदार्तिषु रूपभेदा
स्तैरंबिका समभिरक्षतु मां विपद्भ्यः ॥ ७॥

एकादशाध्याये नारायणीस्तोत्रेण स्तुतया देव्या पुनरुत्थितसुंभनिसुंभवैप्रचित्तवधादिना लोकानुग्रहार्त्थं करिष्यमाणानन्दारक्तदन्तिकाद्यवतारा वर्णिताः तदर्त्थसङ्ग्रहोयं श्लोकः ॥ ७ ॥

सूक्तंयदीयमरविन्दभवादिदृष्ट-
मावर्त्य देव्यनुपदंसुरथस्समाधिः ।
द्वावप्यवापतुरभीष्टमनन्यलभ्य-
न्तामादिदेवतरुणींप्रणमामिदेवीम् ॥ ८ ॥

नमो देव्यै महादेव्यै शिवायै सततं नमः । इत्यादिकं सुम्भनिसुम्भवधार्त्थिभिर्ब्रह्मादिभिः कृतस्तोत्रं देवीसूक्तं तद्ब्रह्मादिभिर्दृष्टं तज्जपन्तौ सुरथसमाधिनामानौ राजवैश्यौ स्वसङ्कल्पितं फलमवापतुरिति त्रयोदशाध्यायार्त्थस्संग्रहीतः तत्र देवीसूक्तंपरञ्जपान्नित्यत्र देवीसूक्तमिहानुपदन्ताभ्यां श्रुतं नमोदेव्यादिकमेव विवक्षितः बुद्धिसन्निहितत्वात् तदेवं सप्तभिश्श्लोकैः कृते देवीमाहात्म्यतात्पर्यसङ्ग्रहे सतामसंशयार्त्थं पाञ्चरात्रलक्ष्मीतन्त्रवचनानि प्रदृश्यन्ते तत्रेमानि शक्रं प्रति श्रीमहालक्ष्मीवचनानि । महालक्ष्मीरहं शक्र पुनस्स्वायंभुवान्तरे । हिताय सर्वदेवानां जाता महिषमर्दिनी । मदीयाश्शक्तिलेशा ये तत्तद्देवशरीरगाः । संभूय ते ममाभूवन्न रूपं परमशोभनं । आयुधानि च देवानां यानियानि सुरेश्वर । मच्छक्तयस्तदाकारा आयुधानिममाभवन् । अभिष्टुता सुरैस्साहं महिषं जघ्नुषी क्षणात् । महिषान्तकरीसूक्तं सर्वसिद्धिप्रदं तदा । देव्याजयादिकं दिव्यं दृष्टं देवैस्सहर्षिभिः । उत्पत्तिं युद्धविक्रान्तिं स्तोत्रञ्चेति सुरेश्वर । कथयन्ति सुविस्तीर्णं ब्राह्मणा वेदपारगाः ।



लभन्ते च फलं शश्वदाविपत्यमनश्वरं । योगनिद्राहरेर्युक्तायासा देवी दुरत्यया । महाकाळ्यास्तनुं विद्धि तां मां देवीं सनातनीं । मधुकैटभनाशार्थं मोहितौ च तया तदा । जघ्नाते वरलाभेन देवदेवेन विष्णुना । विश्वेश्वर्यादिकं सूक्तं दृष्टं तत् ब्रह्मणा तदा । स्तुतये योगनिद्राया मम देव्याः पुरंदर । एषा सा वैष्णवी माया महाकाळी दुरत्यया । स्तुत्या वशीकृता कुर्यात् वशे स्तोतुश्चराचरं । अस्या देव्यास्समुत्पत्तिश्चरितं स्तोत्रमित्यपि । हिताय सर्वभूतानां धार्यते ब्रह्मवादिभिः । तामसे त्वन्तरे शक्र महाविद्याभिधापरा । गौरीदेहात्समुद्भूता कौशिकीति तदा ह्यहं । वधाय दुष्टदैत्यानां तथा सुंभनिसुंभयोः । रक्षणाय च लोकानां जगतामुपकारिणी । मतीयाश्शक्तयो यास्ता देवश्रेष्ठशरीरगाः । तास्तत्तद्रूपधारिण्यस्साहाय्यं विदधुर्हि मे । ताभिर्निहत्य दैत्येन्द्रान् हन्तव्या ये तथा तया । संहृत्यात्मनि तास्सर्वामदीयाविपुषोऽखिलाः । अहं निजघ्नुषी पश्चात्तयोः सुंभानिसुंभयोः । देवि प्रपन्नार्तिहरे प्रसीदेत्यादिकं तथा । नारायणीस्तुतिर्नाम सूक्तं परमशोभनं । स्तुतयो मे तदा दृष्टा देवैरग्निपुरोगमैः । एषां संतूजिता भक्तया सर्वज्ञत्वं प्रयच्छति । कौशिकी सर्वदेवेशी बहुकामप्रदाह्यहं । उत्पत्तिर्युद्धविक्रांतिस्तुतिश्चेति पुरातनैः । पठ्यते त्रितयं बिप्रैर्वेदवेदाङ्गपारगैः । वैवस्वते ऽन्तरे चोभौ पुनस्सुंभनिसुंभकौ । उत्पत्स्येते परोन्मत्तौ देवोपद्रवकारिणौ । नन्दगोपकुले जाता यशोदागर्भसम्भवा । तावहं नाशयिष्यामि सुनन्दा विन्ध्यवासिनी । पुनश्चाप्यतिरौद्रेण रूपेण पृथिवीतले । अवतीर्य हनिष्यामि वैप्रचित्तान्महासुरान् । भक्षयन्त्याश्च तानुग्रान्वैप्रचित्ताश्च दानवान् । रक्तादन्ता भविष्यन्ति डाडिमीकुसुमोपमाः । ततो मां देवतास्वर्गे मर्त्यलोकेच मानवाः । स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदान्तिकां । तस्मिन्देवान्तरे शक्र चत्वारिंशत्तमे युगे । सर्वतश्शतवार्षिक्यामनावृष्ट्यामनम्भासि । मुनिभिस्संस्मृता भूमौ सम्भविष्याम्ययोनिजा । ततश्शतेन नेत्राणां निरीक्षिष्या-

म्महं मुनीन् । कीर्तयिष्यन्ति शतशश्शताक्षीमिति मानवाः । तदाहमखिलं लोकमात्मदेहसमुद्भवैः । भरिष्यामि शुभैश्शाकैरावृष्टैः प्राणधारकैः । शाकम्भरीति मां देवास्तदा स्तोष्यन्ति वासव । तत्रैव च हनिष्यामि दुर्गमाख्यं महासुरं । दुर्गा देवीति विख्यातिं ततो यास्याम्यहं भुवि । शाकम्भरीं स्तुवन् ध्यायन् शक्र संपूजयन्नमन् । अक्षय्यमश्नुते भूतिमन्नपानोद्भवां रतिं । चतुर्युगे च पञ्चाशत्तमे मुनिभिरर्थिता । सुन्दरञ्चातिभीमञ्च रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि मुनीनान्त्राणकारणात् । ततो मां मुनयस्सर्वे स्तोष्यन्त्यानम्रमूर्तयः । भीमा देवी प्रसीदेति भीमामभयदायिनीं । युगे षष्टितमे कश्चिदरुणोनाम दानवः । मनुष्याणां मुनीनाञ्च महाबाधां करिष्यति । तत्राहं भ्रामरं रूपं कृत्वा संख्येयषट्पदा । त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरं । भ्रामरीति च मां लोके तदा स्तोष्यन्ति सर्वतः । इत्थं यदायदा बाधा दानवोत्था भविष्यति । तदा तदाऽवतीर्याहं हनिष्यामि महासुरान् । अमी ते लेशतश्शक्र दर्शिताः परमाद्भुताः । अवतारा निरातङ्का मदीयाः केवलाह्वयाः । एतेषां परमा प्रोक्ता कूटस्था सा महीयसी । महालक्ष्मीर्महाभागा प्रकृतिः परमेश्वरी । अमुष्यास्तुतये दृष्टं ब्रह्माद्यैस्सकलैस्सुरैः । नमो देव्यादिकं सूक्तं सर्वकामफलप्रदम् । इमां देवीं स्तुवन्नित्यं स्तोत्रेणानेन मामिह । क्लेशानतीत्य सकलानैश्वर्यमहदश्नुते । अमुष्यास्सावताराया महालक्ष्म्या ममानघ । जन्मानि चरितैस्सार्द्धं स्तोत्रैर्वैभवदादिभिः । कथितानि पुरा शक्र वसिष्ठेन महात्मना । स्वारोचिषोऽन्तरे राज्ञे सुरथाय महात्मने । समाधये च वैश्याय प्रणतायावसीदते । भक्तिश्रद्धावता नित्यं वसिष्ठेन कृतेति वै । हृदिस्थिता सदा सेयं जन्मकर्मावलीस्तुतिः । एतां द्विजमुखाच्छ्रुत्वा ह्यधीयानो नरस्सदा । विधूय निखिलां मायां सम्यक् ज्ञानं समश्नुते । सर्वां सम्पदमाप्नोति धुनोति सकलापदः । मम प्रभावात्सौभाग्यं कीर्तिञ्चैव समश्नुते । इति ।

क्रमशः

# ॥ दुर्गाचन्द्रकलास्तुतिः ॥

(पूर्वप्रकाशितात्परम्)

अत्र कूटस्था महालक्ष्मीः प्रथममध्यमोत्तरचरितदेवतात्रयसमाष्टिरूपा सकलदेवीमाहात्म्यदेवता विवक्षिता । सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी । इति रहस्याध्यायेषु प्राधानिकाध्याये तस्यां महालक्ष्मीपदप्रयोगात् नमो देव्यादि हि ब्रह्मादिभिः कृतं स्तोत्रं तस्यास्तोत्रमिति तामुद्दिश्य तपश्चरद्भ्यां सुरथसमाधिभ्यां तदेव सूक्तं जप्तमिति युज्यते । अत्र सकलदेवीमाहात्म्यप्रतिपाद्या महालक्ष्मीश्शिवशक्तिरम्बिकैव । सदाशिवाङ्कमारूढा शक्तिरिच्छाह्वया शिवा । महालक्ष्मीरिति ख्याता देवी सर्वगुणान्विता । इति । शिवपुराणे तस्यामपि महालक्ष्मीपदप्रयोगात् । श्रियंलक्ष्मीमौपलामम्बिकाङ्गाम् । इत्यायुष्यसूक्ते तस्यां लक्ष्मीपददर्शनेन तस्मिन् । सन्महत् । इत्यादिसूत्रेण पूजावाचिमहत्पदसमाससम्भवाच्च । न तु भगवच्छक्तिरिह महालक्ष्मीर्दुर्गायाश्शिवशक्त्यंशत्वस्य प्रसिद्धतरत्वात् । अतएव हरिवंशे शम्बरवधार्थं प्रद्युम्नाय शक्रेण प्रेषितं कवचं प्रद्युम्नाय दत्तवता नारदेन दुर्गया शम्बराय दत्तो मुद्गरः पार्वत्या दत्तइति व्यवहृतः । अस्य देवरिपोस्तात मुद्गरो नित्यपूजितः । पार्वत्या परितोषेण दत्तश्शत्रुनिबर्हणः । अजय्यश्चैव संग्रामे देवदानवमानवैः । तदस्त्रप्रतिघातार्थं देवीं स्मर्तुमिहार्हसि । स्तुत्या चैव नमस्या च महादेवी रणोत्सुकैः । तत्रैव क्रियतां यत्नस्संग्रामे रिपुणा सह । इति । अयञ्च मुद्गरो दुर्गया शम्बराय दत्त इति तदनन्तरं प्रद्युम्नकृतएव स्तोत्रे व्यक्तम् । यथा। नमस्ते सुम्भहननि निसुम्भहृदिदारिणि । काळरात्रिन्नमस्येऽहं कुमारीञ्चापि नित्यवत् । कान्तारवासिनीं देवीं नमस्येऽहं कृताञ्जलिः । श्रीविन्ध्यवासिनीं देवीं रणदुर्गां रणप्रियाम् । त्रिशूलिनीं नमस्यामि महिषासुरघातिनीम् । सिंहवाहां नमस्यामि सिंहप्रवरकेतनाम् । इति कामवचस्तुष्टा दुर्गा सुप्रीतमानसा । इत्यादि तदनन्तरसन्दर्भेणाप्येतद्व्यक्तम् । यत्तु लक्ष्मीतन्त्रविष्णुशक्तिरूपया लक्ष्म्या शक्रं प्रति स्वावतारभेदत्वमुक्तम् । तत्पार्वत्याभेदाभिप्रायं स्वमहिमख्यापनार्थमिति नेतव्यम् ॥ ८ ॥

अथ वाराहपुराणोक्तमहिमानं संग्रह्णाति—

माहिष्मतीतनुभवश्च रुरुश्च हन्तु-
मविष्कृतैर्निजरसादवतारभेदैः ।
अष्टादशाहतनवाहतकोटिसंख्यै-
रम्बा सदा समभिरक्षतु मां विपद्भ्यः ॥ ९ ॥

एवं वाराहपुराणे कथा कदाचित्कैलासगिरौ पिनाकिन्यास्थानमास्थितवति चतुर्मुखस्समागत्य दैत्यबाधां तस्मै निवेदयामास । तदा नारायणोऽपि समागतः । तेषामन्योन्यं पश्यतां दृष्टिसमागमे काचन कन्या जज्ञे सा तेषां वचनात्स्वगुणैर्विभक्ता त्रिशरीरा बभूव । तत्र सात्विकी ब्रह्मणस्सृष्टिशक्तिस्सा तच्छरीरं प्रविष्टा । तदाप्रभृति तदीया सृष्टिर्ववृधे राजसी वैष्णवी पालनशक्तिः सा मन्दरेस्वसदृशसौन्दर्यशालिनीरष्टादशकोटिसंख्याः कुमारीस्सृष्ट्वा तत्र पुरीं निर्माय ताभिस्सह विहरमाणा स्थिता । तस्मिन् विप्रचित्तेस्तनयायां माहिष्मत्यां सिन्धुद्वीपं तपस्यन्तं तदाश्रमादपसार्य स्वयं तत्र सखीभिस्सह विहर्तुं महर्षिरूपमास्थाय तं भीषितवत्यां तेन महिष्येव भवेति शप्तायां सिन्धुद्वीपस्य विद्युमत्या दैत्यकन्याया दर्शनेन स्कन्नं शुक्लं पीतवत्यामुत्पन्नेन महिषासुरेण नारदप्रेरणया तां कामयमानेन प्रहितो दूतस्तस्याः प्रतिहार्या जययैव तिरस्कृतो युद्धार्थमागतो महिषासुरः तयाष्टादशकोटिसंख्यकन्यापरिवारसहितया विंशतिभुजया सिंहाधिरूढया निहतः, तामसी रौद्री संहारशक्तिः तस्यां नीलगिरौ स्थितायां समुद्रजलमध्ये पुरं निर्माय स्थितेन रुरुनाम्ना दैत्येन विद्रावितास्तामेव शरणं ययुः तस्यां हसन्त्यां वक्त्रात् नवकोटिसंख्या भीषणाकारा नानाविधायुधधरा देव्यो निर्ययुः ताभिस्सहितया तया समरे स दैत्यो निहतः इति इदं कथाद्वयमत्र संगृहीतम् ॥ ९ ॥

एतच्चरित्रमखिलं लिखितं हि यस्या-
स्संपूजितं सदन एव निवेशितं वा ।
दुर्गश्च तारयति दुस्तरमप्यशेषं
श्रेयः प्रयच्छति च सर्वमुमां भजेताम् ॥ १० ॥



अत्र वराहपुराणे वचनानि । य इदं शृणुयात्सर्गं त्रिशक्त्याः परमं शिवम । सर्वपापविनिर्मुक्तः परन्निर्वाणमाप्नुयात् । यश्चैनं शृणुयाद्भक्त्या नवम्यां नियतस्थितः । स राज्यमतुलं लब्ध्वा भयेभ्यश्च प्रमुच्यते । यस्यैतल्लिखितं गेहे सदा तिष्ठति धारिणी । न तस्याग्निभयं घोरं सर्पचोरादिजं भवेत् । यश्चैतत्पूजयेद्भक्त्या पूजयेत् स्थापितं बुधः । तेन लब्धं भवेत्सर्वं त्रैलोक्यं स चराचरम् । जायन्ते पशवः पुत्रा धनधान्यं वरस्त्रियः । रत्नान्यश्वा गजा भृत्या ग्रामाश्चाशु भवन्त्युत । यस्येदं तिष्ठते गेहे तस्य सर्वमिदं भवेत् । इति ॥ १० ॥

यत्पूजनस्तुतिनमस्कृतिभिर्भवन्ति
प्रीताः पितामहरमेशहरास्त्रयो ऽपि ।
तेषामपि स्वकगुणैर्ददती वपूंषि
तामीश्वरस्य तरुणीं शरणं प्रपद्ये ॥ ११ ॥

इत्थं वराहपुराणे कथा वेत्रासुरेण वित्रासिता देवा ब्रह्माणं शरणं जग्मुः ब्रह्मा तदा गंगाजले निमज्य जपनिष्ठ स्थितः । देवानां त्राहित्राहीत्याक्रोशमाकर्ण्य चिन्तयतस्तस्मात् कन्यारूपा महामाया प्रादुर्बभूव सायुधाष्टमहाभुजा सा महादेवी जलान्निर्गत्य सिंहाधिरूढा सती वेत्रासुरं जघान ततो महेश्वरस्तां तुष्टाव तदानीं ब्रह्मा जलान्निर्गत्य । यस्तु सायं तथा प्रातरिदं स्तोत्रं पठिष्यति । त्वयेरितं महादेव तस्य देव्या समं भवेत् । वरदो भव देवेश सर्वापत्सूद्धरस्व तम् । इत्युवाच । त्वया देवि महत्कार्यं कर्तव्यश्चान्यदस्ति नः । भविष्यन्महिषाख्यस्य असुरस्य विनाशनम् । इति चोवाच । इति अत्र महेश्वरेण देवी स्तुतेति सन्तुष्टेन ब्रह्मणैवमुक्तमित्युक्तिभंग्या । नवम्याञ्च सदा पूज्या इयं देवी समाधिना । वरदा सर्वलोकाना भविष्यति न संशयः । नवम्यां यस्तु पिष्टाशी पूजयिष्यति मानवः । नारी वा तस्य संपन्नं भविष्यति मनोगतम् । इति ब्रह्मोक्त्या च देव्यास्तुत्यादिभिः ब्रह्मणः प्रीतिरवसीयतेमहेश्वरं प्रति ब्रह्मवचनेनैव देवीस्तुत्या महेश्वरस्य प्रीतिरवसीयते वराहपुराणे त्रिशक्तिनिर्णयावसानवचनैरपि तथावसीयते ता-

न्येवं पठ्यन्ते । नवकोट्यस्तु चामुण्डा भेदभिन्ना व्यवस्थिताः । या रौद्री तामसी शक्तिस्सा चामुण्डा प्रकीर्तिता । अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते । या सा तु राजसी शक्तिः पालनी सैव वैष्णवी । या ब्रह्म-शक्तिस्सत्वस्था सानन्ता वै प्रकीर्तिता । एतेषां सर्वभेदेषु पृथगेकैकशो-धरे । सर्वासां भगवान्रुद्रस्सर्वगत्वात्पतिर्भवेत् । यावन्त्यस्ता महाश-क्त्यस्तावद्रूपाणि शङ्करः । कृतवांस्तांश्च भजते पतिरूपेण सर्वदा । यश्चा-राधयते तास्तु तस्य रुद्रे तु तोषिते । सिध्यन्ते तास्तदा देव्यो मान्त्रिणो नात्र संशयः । इति देव्यास्तुस्त्या हरेः प्रीतिर्हरिवंशे । हरिणा प्रोक्तस्या-स्यास्तवस्यावसाने देवीं प्रति । ये च त्वां मत्प्रभावज्ञाः प्रणमिष्यन्ति मान-वाः । न तेषां दुर्लभं किञ्चित्पुत्रतो धनतो ऽपि वा । त्वान्तु स्तोष्यन्ति ये भक्त्या स्तवेनानेन सुव्रते । तस्याहं न प्रणश्यामि स च मे न प्रणासति । इति हरेरेव वचनेनावगम्यते । हरिवंशे । अनिरुद्धकृतदेवीस्तोत्रावसाने तु देव्या नामकीर्तनमात्रेण ब्रह्मादिकस्य सर्वस्य जगतः प्रीतिरुक्ता । ब्रह्मा विष्णुश्च शक्रश्च चन्द्रसूर्याग्निमारुताः । अश्विनौ वसवश्चैव धाता भूमिर्दि-शो दर्शाभगो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तदा । सरितस्सागराश्चैव ना-नाविद्याधरोरगाः । तथा नागास्सुपर्णाश्च गंधर्वाप्सरसां गणाः । कृत्स्नं ज-गदिदं प्रीतं देव्या नामानुकीर्तनात् । इति । विष्णुपुराणे ऽपि । देवीस्तुत्या भगवतः प्रीतिरुक्ता । ये त्वामार्येति दुर्गेति वेदगर्भाम्बिकेति च । भद्रेति भद्रकाळीति क्षेम्या क्षेमकरेति च । प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्त-यः । तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति ॥ ११ ॥

कान्तारमध्यदृढलग्नतयावसन्ना-
मग्नाश्च वारिधिजले रिपुभिश्च रुद्धाः ।
यस्याः प्रपद्य चरणौ विपदस्तरन्ति
सा मे सदास्तु हृदि सर्वजगत्सवित्री ॥ १२ ॥

हरिवंशे देवीं प्रति भगवद्वचनानि । कान्तारेष्ववसन्नानां मग्नानां



च महार्णवे । दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् । इति तदर्थो ऽत्रानुसंगृहीतः ॥ १२ ॥

बन्धे वधे महति मृत्युभये प्रसक्ते
वित्तक्षये च विविधे च महोपतापे ।
यत्पादपूजनमिह प्रतिकारमाहु-
स्सा मे समस्तजननी शरणं भवानी ॥ १३ ॥

हरिवंशे देवीं प्रति भगवद्वचनानि । नृणां बन्धं वधं पुत्र भयं नाशं धनक्षयम् । व्याधिमृत्युभयश्चैव पूजिता शमयिष्यसि । संग्रामेषु च सर्वेषु ह्यग्निप्रज्वलितेषु च । नदीतीरेषु घोरेषु कान्तारेषु भयेषु च । प्रवासे राज-बन्धे च शत्रूणाञ्च प्रमर्दने । प्राणात्ययेषु सर्वेषु त्वं हि रक्षा न संशयः । इति वराहपुराणे महिषासुरवधानन्तरं ब्रह्मादिकृतस्तोत्रावसाने तेषां वच-नानि । शरणं त्वां प्रपद्यन्ते ये देवीं परमेश्वरीम् । न तेषां जायते किञ्चि-दशुभं रणसङ्कटे । सर्पव्याघ्रभये घोरे चोरराजभये तथा । निगळस्थो ऽपि बद्धश्च त्वां स्मरेद्यस्तु मानवः । सो ऽपि बन्धैर्विमुक्तस्स्यात्ससुखं वर्द्धते चिरं । इति ॥ १३ ॥

बाणासुरप्रहितपन्नगबन्धमोक्ष-
स्तद्बाहुदर्पदळनादुषया च योगः ।
प्राद्युम्निना द्रुतमलभ्यत यत्प्रसादा-
त्सा मे शिवा सकलमप्यशुभं क्षिणोतु ॥ १४ ॥

अनेन श्लोकेन संगृहीतमर्थजातं हरिवंशे नागपाशबन्धनानन्तरप्र-वृत्तकथासन्दर्भसामर्थ्यादवगम्यते । तथाहि । तत्र बाणासुरप्रहितैर्नागपाशै-र्बद्धमनिरुद्धं दृष्ट्वा तदर्थं कृष्णाय निवेदयितुं नारदे द्वारवतीं गतवति सति । नष्टो ऽयं दानवः क्रूरो युद्धं प्राप्य न संशयः । स गत्वा नारद-स्तत्र शङ्खचक्रगदाधरम् । ज्ञापयिष्यति तत्वेन इममर्थं तथैव तत् । इत्य-निरुद्धस्य चिन्तनम् । किमर्थं भीरु माभैस्त्वं माभैषीश्शुभलोचने । पश्य सुश्रोणि सम्प्राप्तं मत्कृते मधुसूदनम् । यस्य शङ्खस्वनं श्रुत्वा बाहुशब्दं

बलस्य च । दानवा नाशमेष्यन्ति गर्भाश्चासुरयोषिताम् । इति तेन कृतमु षाश्वासनञ्चोपन्यस्ययत् । ततो देवीं स कौमारीं रक्षार्थं शरणं गतः । इत्यु क्तं यच्चानिरुद्धेन कृतम् । महेन्द्रविष्णुभगिनीं नमाम्यात्महिताय वै । मन सा भावशुद्धेन शुचिस्तोष्ये कृताञ्जलिः । इत्यादि । त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येत बन्धनात् । अवेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे इत्यन्तम् । द्रौपदीवस्त्रहरणकाले । सौभवधव्यासङ्गेनेव केनचिन्महत देवकार्यसङ्गेन कृष्णस्येदानीमिहागमने विघ्नो माभूत् । शीघ्रमागत्य भगवा मस्मान्बाणकृतात्तद्गृहे निरोधात्स्वात्मानं मोचयत्वित्येतदर्थञ्च देवी तु कृष्णे नैवानिरुद्धस्य नागपाशमोक्षः कार्यः इति देवकृतां मर्यादामन्वीक्ष्य तस्य वेदनापरिहाराय दृढं नागपाशबन्धं शिथिलीकृत्य शीघ्रं कृष्णागमननिवे दनेन तमाश्वासितवतीति तदनन्तरमुक्तम् । नागपाशेन बद्धस्य हृतस्यो द्धतचेतसः । स्फोटयित्वा कराग्रेण पञ्जरं वज्रसन्निभम् । बद्धं बाणपुरे वीर मनिरुद्धमभाषत । सान्त्वयन्ती च सा देवी प्रसादाभिमुखी तदा । चक्रा युधो मोक्षयिता निरुद्ध त्वां बन्धनादाशु सहस्व कालम् । छित्वाशु बाण स्य च बाहुचक्रं पुरीं निजां नेष्यति दैत्यसूदन । इति । यत्तु तदनन्तरम् नमोऽस्तु ते देवि वरप्रदा इति । इत्यादि । प्रियतां मे जगन्नाथश्शैलपुत्रि वसुन्धरे । त्रायस्व मां महादेवि नारायणि नमोऽस्तु ते । नमामि शिरसा देवीं बन्धनस्थो विमोचितः । इत्यन्तं पुनस्तवनं शीघ्रं मोचनीयोयमिति मयि कृष्णस्य प्रीतिमुत्पादयेति प्रार्थनार्थम् । भावश्च क्रियतामस्य हन्तुमेतौ महासुरौ । इति देवीमाहात्म्यगतब्रह्मकृतस्तोत्राम्नातवचनेन हि देव्याः भग वद्भावप्रेरकत्वमवगतम् ॥ १४ ॥

एवं प्राप्तां विपदं निवारयितुं भगवद्भावप्रेरणाय रुक्मिण्या कृतं देव्या राधनं संगृह्णाति—

पापः पुलस्त्यतनयः पुनरुत्थितो मा-
मद्यापि हर्तुमयमागत इत्युदीतम् ।



यत्सेवनेन भयमिन्दिरयावधूत-
न्तामादिदेवतरुणीं शरणं गतोऽस्मि ॥ १५ ॥

भागवते रुक्मिण्युद्वाहार्थं समागत्य कृताभ्युदयिकमनन्तरदिने रुक्मि- णीमुद्वोढुमुद्युञ्जानं शिशुपालमन्वीक्ष्यन्त्याः प्रसह्य हरणार्थं कृष्णागमनं प्रती- क्षमाणाया रुक्मिण्याश्चिन्ता वर्णिता । भीष्मकन्या वरारोहा काङ्क्षन्त्यागमनं हरेः । प्रत्यापत्तिमपश्यन्ती द्विजं सा चिन्तयत्तदा । अहो त्रियामान्त- रित उद्वाहो मे ऽल्पराधसः । नागच्छत्यरविन्दाक्षो नाहं वेद्मयत्र कार- णम् । सो ऽपि नावर्तते ऽद्यापि मत्सन्देशहरो द्विजः । अपि मय्यनवद्या- त्मा दृष्ट्वा किञ्चित् जुगुप्सितम् । मत्पाणिग्रहणे नूनं नायाति ह्यकृतोद्यमः । दुर्भगाया हि मे धाता नानुकूलो महेश्वरः । देवी वा विमुखी गौरी रुद्राणी गिरिजा सती । ततः कृष्णाह्वानाय प्रेषिते ब्राह्मणे प्रत्यागत्य बलदेवसहितं कृष्णं समागतं निवेदितवति प्रहृष्टया रुक्मिण्या कृतं देवाराधनम् । कन्या- चान्तःपुरं प्रागाद्भटैर्गुप्ताम्बिकालयम् । पद्भ्यां विनिर्ययौ द्रष्टुं भवानीपाद- पल्लवम् । इत्युपक्रम्य इत्थं वर्णितम् । आसाद्य देवसदनं धौतपादकरा- म्बुजा । उपस्पृश्य शुचिश्शान्ता प्रविवेशाम्बिकान्तिकम् । तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः । भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम् । नमस्ये त्वाम्बिके ऽभीक्ष्णं स्वसन्तानयुतं शिवम् । भूयात्पतिर्मे भगवान् कृष्ण- स्तदनुमोदताम् । इति अत्र कृष्णे स्वविवाहोत्कण्ठया समागतेऽपि यन्म- हत्या भक्त्या समाराधनपूर्वकमेवं प्रार्थनं कृतम् तत् कृष्णस्य स्वविषय- प्रीतिस्थैर्यार्थं सम्भावितसकलविघ्ननिवारणार्थञ्चेति स्पष्टमेव यः पूर्वं लक्ष्म्या- स्सीतावतारे हर्ता रावणः स एव शिशुपालो भूत्वा रुक्मिण्यवतारे तदु- द्वाहार्थमागत इत्येतन्मूलं कृत्वा लक्ष्म्या उक्तप्रकारेण भयं श्लोके निबद्धं इदं रुक्मिण्या कृतं समाराधनं शिवगणपतिकार्तिकेयसहितभवानीरूपाया देव्याः न तु क्रियाशक्तिप्रधानदुर्गारूपायाः तथाप्यभेदात्तद्रूपानुसन्धानेन स्तोत्रं कृतम् ॥ १५ ॥

कृष्णपरिग्रहलाभार्थं गोपकन्याभिः कृतं दुर्गारूपेण देव्याराधनं भागवतोक्तं संगृह्णाति—

यध्यानजं सुखमवाप्यमनन्तपुण्यै-
स्साक्षात्तमच्युतपरिग्रहमाश्ववापुः ।
गोपाङ्गनाः किल यदर्चनपुण्यमात्रा-
त्सा मे सदा भगवती प्रभवतु प्रसन्ना ॥ १६ ॥

दुस्सहप्रेष्ठविरहतीव्रतापधुताशुभाः । ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमंगुळाः । तमेव परमात्मानं जारबुध्यापि सङ्गताः । जहुर्गुणमयं देहं सद्यः प्रक्षीणकल्मषाः । इति भागवते । ध्यानप्राप्ताच्युताश्लेषनिर्वृतिरपि प्राचीनसकलशुभकर्मव्यतिरेकेणेत्युक्तं साक्षादेवाच्युतालिङ्गनादिस्तत्परिग्रहो देव्यर्चनपुण्यमात्रेण लब्ध इत्यपि भागवत एवोक्तं तत्रहि । हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः । इत्युपक्रम्य । कात्यायनिमहामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरु ते नमः । इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः । एवं मासव्रतं चेरुः कुमार्यः कृष्णचेतसः । भद्रकाळीं समानर्चुर्भूयान्नन्दसुतः पतिः । इति कृष्णपरिग्रहलाभार्थं गोपकुमारीणां देव्या अर्चनमुक्त्वा ततः प्रसन्नेन कृष्णेन तथैव स्वपरिग्रहोऽङ्गीकृतः इति तदनन्तरमुक्तम् । सङ्कल्पो विदितस्साध्यो भवतीनां मदर्चने । मयानुमोदितस्सो ऽसौ सद्यो भवितुमर्हति । यात बाला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः । यदुद्दिश्य व्रतमिदं चेरुश्चार्यार्चनं सतीः । इति अत्रार्यार्चनमेव भगवदर्चनमिति व्यवहृतम् । आर्यार्चनेन भगवत्प्रीतेः हरिवंशादिवचनोदाहरणेन प्राक्प्रपञ्चितत्वात् ॥

अथ सामगानां सामविधिब्राह्मणोक्तप्रकारेण देव्या मुक्तिप्रदत्वं दर्शयति—

रात्रिं प्रपद्य इति मन्त्रविदः प्रपन्ना-
नुद्बोध्यमृत्यवधिमन्यफलैः प्रलोभ्य ।
बुध्वा च तद्विमुखतां प्रतनन्वयन्ती-
माकाशमादिजननीं जगतां भजेताम् ॥ १७॥



तद्वायत्र्यर्थस्य कन्यां कुमारिणीमित्यत्र प्रत्यभिज्ञानात् रात्र्यादिपदानां तत्रान्वयोपपत्तेश्च रात्रिरूपा हि सा । अस्यास्तनुस्तमोद्वारा निशादिवसनाशिनी । इति देवीमधिकृत्य हरिवंशोक्तेः पुनर्भूश्च असुरवधार्थं नानावतारपरिग्रहात् । अतएव मयोभूः प्राणिनां सुखस्य सम्पादयित्री कन्याच । अजातपुंस्पर्शरतिरधृष्या चातिसुन्दरी । इति तामधिकृत्य शिवपुराणोक्तेः शिखण्डिनी मयूरकलापभूषणवती मयूरकलापध्वजवती वा हरिवंशे कृष्णवाक्येषु । शशिरश्मिप्रकाशेन हारेणोरसि राजिता । दिव्यकुण्डलपूर्णाभ्यां श्रवणाभ्यां विभूषिता । इति देवीवर्णनं प्रस्तुत्य । अङ्गदेन मयूराणामङ्गदेन च भास्वरा । ध्वजेन शिखिबर्हाणामुच्छ्रितेन समावृता । इत्युक्तत्वात् । असुरबन्धनार्थं पाशहस्ता च नित्ययुवतिः, बाल्यवार्द्धकावस्थारहिता च कंसमोहनार्थावतारे क्षणं शैशवाभिनये ऽपि तदानीमेव यौवनाविष्करणोक्तेः कुमारिणीं कुत्सितानसुरान्मारयितुं शीलवती च एवं देवीविषयमहामन्त्रं लब्ध्वा तेन ये देवीं प्रपद्यन्ते तेषां पुरतो देवी प्रत्यक्षीभूय तदीयमरणरूपस्वदेयफलकालपूर्वावधिं बोधयतीत्येतत् स्वर्गादिफलान्तरैः प्रलोभयतीत्येतच्च तत्रैव मन्त्राम्नानानन्तरमुक्तम् । साहेनमुमुवाचास्मिन् संवत्सरे मरिष्यस्यस्मिन्नयने ऽस्मिन्नृतावस्मिन्मासे ऽस्मिन्नर्द्धमासे ऽस्मिन्द्वादशरात्रे ऽस्मिन् षड्रात्रे ऽस्मिन्त्रिरात्रे ऽस्मिन्द्विरात्रे ऽस्मिन्नहोरात्रे ऽस्मिन्नहन्यस्यां रात्रावस्यां वेळायामस्मिन्मुहूर्ते मरिष्यस्येहि स्वर्गं लोकं गच्छ देवलोकं वा ब्रह्मलोकं वा क्षत्रलोकं वा विरोचमानामेहि योनिं प्रविशेत्युवाच । वक्तीत्यर्थः ब्रह्मलोकं ब्राह्मणजात्या तपःप्रभृतिभिर्लब्धव्यं लोकं, क्षत्रलोकं क्षत्रियजात्या प्रजापालनादिभिः प्राप्यं लोकं अस्मिन्नेव वा लोके विरोचमानामुत्कृष्टां ब्राह्मणादियोनिं प्रविश । एवं देव्या प्रलोभितानां प्रपन्नानां सांसारिकफलवैराग्येण मुक्तिप्रार्थनं उक्तप्रार्थनमात्रेण रात्र्युपासकानामेतावदेव मुक्तिसाधनं नान्यदपेक्षणीयमित्येतच्च तदनन्तरमाम्नातं नाहं प्रवेक्ष्यामि भूतोक्तमायाब्रह्मणो दुहितुस्संरागवस्त्रायाः जायते म्रियते सन्धीयते च रात्रिस्तु मा पुनातु रात्रिः खमेतत् पुष्पान्तं यत् पुराणसाकाशं तत्र मे स्थानं कुर्वपुनर्भवायापुनर्जन्मने एतावदेव रात्रौ रात्रेर्व्रतं चेति भूतेषु श्रेष्ठायास्संरागवस्त्रायाः आर्तवेन रजसा संरक्तवस्त्रायाः ब्रह्मणः ब्रह्मजातेर्दुहितुर्योनिं न

प्रवेक्ष्यामि यतो योनिं प्रविष्टो जायते जातश्च म्रियते मृतश्च सन्धीयते देहान्तरेण सम्बध्यते किन्तर्हि फलमपेक्षितमित्याकाङ्क्षायां रात्रिस्त्वित्यादिस्तु शब्दो वैलक्षण्यार्थः रात्रिर्देवी मा पुनातु जन्मान्तरप्रापककर्मबन्धान्मुञ्चतु रात्रिरिति द्विरुक्तिरादरार्था, एवं परोक्षविषया प्रार्थिता देवी प्रत्यक्षविषया प्रार्थ्यते यत्पुराणमाकाशं परब्रह्मलोकरूपं एतत् खमाकाशं पुण्यस्य कर्मफलोपभोगस्थानस्यान्तं बहिर्भूतं तत्र तस्मिन्नाकाशे ब्रह्मलोके मम स्थानं कुरु स्थानान्तरेभ्यो विशेषं दर्शयति अपुनर्भवायास्य विवरणमपुनर्जन्मन इति उक्तगन्त्रेण मुक्त्यर्थं देवीप्रपदनेन किञ्चिदङ्गमस्ति नाप्युपवासादिव्रतान्तरसमुच्चयापेक्षास्तीत्याह एतावदिति एतावदेवकर्तव्यं नास्याङ्गान्तरं रात्रौ रात्रिदेवताविषये अथवा रात्राविदं प्रपदनं कर्तव्यमित्यर्थः रात्रेव्रतञ्चैतावदेव नोपवासाद्यन्यदपेक्ष्यमस्तीत्यर्थः इति शब्दः खण्डसमाप्त्यर्थः ॥ १७॥

देशकालेषु दुष्टेषु देवीचन्द्रकलास्तुतिः ।
सन्ध्ययोरनुसन्धेया सर्वापद्विनिवृत्तये ॥

इति श्रीमद्भारद्वाजकुमजलधिकौस्तुभ श्रीकण्ठमतप्रतिष्ठापनाचार्य चतुरधिकशतप्रबन्धनिर्वाहक महाव्रतयाजि श्रीमदप्पय्यदीक्षितेन्द्राणां कृतिष्वन्यतमा दुर्गाचन्द्रकलास्तुतिः समाप्ता ॥

॥ ओं सर्वं शिवम् ॥

ओं

# (श्रीमत्सायणाचार्यभाष्यमपि)

अथ पुनर्जन्माभावकामस्य काश्चिद्रात्र्युपासनां विवक्षुस्तत्प्रतिजानीते । अथ यः कामयेत पुनर्नः प्रत्याजायेयम् । इति अथशब्दोऽधिकारे यः पुमाननेकजन्मभिर्दुःखितस्सन्नपुनःप्रत्याजायेयमिति पुनर्जन्मान्तरं न गच्छेयमिति कामयेत तस्य प्रयोगं वक्ष्यामीति शेषः तदुपासनसाधनमन्त्रमाह । रात्रिं प्रपद्ये पुनर्भूर्मयोभूः कन्यां शिखण्डिनीं पाशहस्तां युवतीं कुमारिणीमादित्यश्चक्षुषे वातः प्राणाय सोमो गन्धायापस्नेहाय मनोनुज्ञाय पृथिव्यै शरीरम् । इति रात्रिं तदभिमानिदेवतां शरणं प्रपन्नोऽस्मि उपवासइत्यर्थः



कीदृशीं पुनर्भूः पुनःपुनः प्रतिदिनं भवित्री जायमाना मय इति सुखनाम सर्वेषां प्राणिनां सुखस्य भावयित्रीं कन्यां कमनीयां गृहनक्षत्रादिभिर्दीप्यमानां वा । कन दीप्तिकान्तिगतिषु । इति धातुः शिखण्डिनीं शिखण्डः केशपाशः प्रशंसायामिति प्रशस्तकेशपाशः पाशहस्तां असुरबन्धनाय हस्तेन धृतपाशां युवतीं नित्यतरुणीं बाल्यवार्द्धकाद्यवस्थारहितामित्यर्थः कुमारिणीं कुत्सितं मारयन्तीति कुमारा रक्षःप्रभृतयस्तैस्तद्वतीं एवङ्गुणाया रात्रेः प्रसादात् आदित्यश्चक्षुरिन्द्रियाभिमानीदेवश्चक्षुषे इन्द्रियायोत्सुकस्य मम सम्यग्दर्शनाय तादर्थ्ये चतुर्थी तथा वातः वायुदेवता प्राणाः पञ्चवृत्यामकामायां देहान्तर्वर्तने अनुग्राहको भवतु अस्मच्छरीरं मापरित्याक्षीदित्यर्थः सोमश्चन्द्रमा गन्धाय देहस्य सौरभ्याय आपः अब्देवता स्नेहाय देहस्यारूक्षतायै शरीरस्निग्ध्याय मनो मदीयमानसं रात्रेरनुग्रहात् अनुज्ञाय अनुज्ञानमनुज्ञः घञर्थेकविधानम् । इति भावे कप्रत्ययः तस्मै भवतु अनुक्षणं ज्ञानविशिष्टं भवत्वित्यर्थः । पृथिव्यै शरीरं विभक्त्योर्व्यत्ययः पृथिवीदेवतां शरीराय तद्दार्ढ्याय भवतु यद्वा पृथिव्यै देव्यै मम शरीरं भवतु तदधीनरक्षणं भवत्वित्यर्थः एवमुपासितारं प्रसन्ना सती रात्रिरित्थं ब्रूत इत्याह साहैनमुवाचास्मिन् संवत्सरे मरिष्यस्यस्मिन्नयने ऽस्मिन्नृतावस्मिन्मासे ऽस्मिन्नर्द्धमासे ऽस्मिन् द्वादशरात्रे ऽस्मिन् षड्रात्रे ऽस्मिंस्त्रिरात्रे ऽस्मिन् द्विरात्रे ऽस्मिन्नहोरात्रे ऽस्मिन्नहन्यस्यां राड्यामस्यां वेलायामस्मिन्मुहूर्ते मरिष्यस्येहि स्वर्गं लोकं देवलोकं वा ब्रह्मलोकं वा क्षत्रलोकं वा विरोचमानास्तिष्ठन् विरोचमानामेहि योनिं प्रविशेति सा खलु प्रसन्ना रात्रिरेनमुपासकमुवाच ब्रवीति लटश्चान्दसो लिट् किमिति अस्मिन् संवत्सर इत्यारभ्यास्यां वेळायामित्यन्तेन संवत्सरतदवयवभूतेष्वयनादिकालविशेषेषु च मरिष्यसीति मारण मुहूर्ते ब्रुवति अस्मिन् क्षणे त्वं मरिष्यस्यतएव आगच्छ स्वर्गादीन् लोकान् यथाभिलाषं ब्राह्मणजात्या वामादिनालब्धव्यो लोकः क्षत्रेण क्षत्रियजात्या प्रजापालनादिभिः प्राप्यो लोक एषु भिमतं लोकं गत्वा तत्र विरोचमानो दीप्यमानश्चिरं तिष्ठ अथवास्मिन्नेव

लोके विरोचमानां दीप्तामुत्कृष्टां ब्राह्मणादियोनिं प्रविश तदर्थमेहि आगच्छेति एवं राज्योक्तमुपासको निराकुर्यादित्याह नाहं योनिं प्रवेक्ष्यामि भूतोक्तमायाब्रह्मणो दुहितुस्संरागवस्त्राया जायते म्रियते सन्धीयते चेति अहमुपासकस्त्वदुक्तां प्रशस्तामपि योनिं न प्रवेक्ष्यामि योनेः प्राशस्त्याभावमेवाह भूतेति भूतोक्तमायाभूतेषु श्रेष्ठायास्संरागवस्त्राया आर्तवेन रजसा संरक्तवस्त्राया ब्रह्मणो ब्राह्मणजातेर्दुहितुस्त्रिया अपि योनिं न प्रवेक्ष्यामि कुतो ऽप्रवेश इत्याह यत एको योनिं प्रविष्ठो जायते जातस्सन्म्रियते प्राणैर्वियुज्यते मृतस्सन्धीयते देहान्तरेण सम्बध्यते अत इत्यर्थ इति निराकृत्य परोक्षेण स्तुवन् स्वाहितापुनर्भवमाह रात्रिस्तु मा पुनातु रात्रिः खमेतत् पुष्पान्तं यत् पुराणमाकाशं तत्र मे स्थानं कुर्वन्नपुनर्भवायापुनर्जन्मने एतावदेव रात्रौ रात्रिव्रतं च रात्रेर्व्रतञ्च तुशब्दो वैलक्षण्यार्थः अपितु रात्रिर्देवता मां पुनातु जन्मान्तरापादकात् कर्मणश्शोधयितुं रात्रिरिति पुनरुक्तिरादरार्था अथ प्रत्यक्षोक्तिः हेरात्रे पुराणं पुरातनं स्वर्गादिलक्षणमर्चिरादिमार्गः तं प्राप्यमाकाशमासमन्तात् काशमाप्रभं ब्रह्मलोकाख्यं खमेतत खमाकाशं पुष्पान्तं पुष्पं कर्म फलोपभोगस्थानं तस्यान्ततो बाहिर्भूतं तत्र तस्मिन्नाकाशे ब्रह्मलोके मम स्थानं कुरु किमर्थमपुनर्भवाय पुनर्भवपरिहारायास्यैव विवरणमपुनर्जन्मन इति न मे ब्रह्मलोकनिवासिनः पुनरुत्पत्तिः । न च पुनरावर्तते । इति श्रुतेः स्मृतेश्च । ब्रह्मणा सह सर्वे ते संप्राप्ते प्रतिवत्सरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् । इति पूर्वोक्तमन्त्रसाध्यप्रतिपादनव्यतिरेकेण राज्युपासनं जपान्तं प्रयोगान्तरेष्विवोपोषणादिव्रतान्तरञ्च नास्तीत्याह रात्रौ विषयसप्तमी रात्रिविषयं रात्रिं प्रपद्य इत्यादिकर्मसाध्यं यत्प्रपदनमुक्तमेतदेव रात्रेर्देवतायाः प्रसादनं प्रपदनञ्चैतदेव यद्वा रात्रावित्यधिकरणसप्तमी एतत् वृतं रात्रावेव कर्तव्यम् । नदिवेति ॥

इति सायणाचार्यविराचिते माधवीये सामवेदार्थप्रकाशे सामविधाख्ये
तृतीयब्राह्मणे तृतीयाध्याये अष्टमःखण्डः ॥

॥ सर्वं शिवम् ॥

---

## ॥ अन्योक्तयः ॥

( पूर्वप्रकाशितात्परम् )

हसन्ती ।

वृत्तश्लाघ्या वृतिमदनुपप्रेक्षणीयोदराढ्या
वृद्धाराध्या व्यजनपवनैर्गर्भभारालसाङ्गी ।
भास्वद्वक्त्रेत्यथ युवजनैरङ्कमारोपिता त्वं
हस्तेप्यस्तघृणमहह धिक् प्लोषयेस्त्वं हसन्ति ॥ ३८ ॥

वापी ।

अगाधार्द्रस्वान्ता रसभरितराजत्तनुमती
सती वृत्तश्लाघ्या वृतिमदुपकण्ठा गुणवती ।
सदा सद्भिः सेव्या शमितबहुतृष्णेत्युपनतं
जनं दीनं पापे कबलयसि वापि प्रपतितम् ॥ ३९ ॥

प्राची ।

भर्ता भर्ता सुराणां त्रिजगदधिपतिर्यत्सहस्राक्ष इन्द्रः
पुत्रः पात्रं स्तुतीनां ग्रहपतिरनघो यत्सहस्रांशुरर्कः ।
ब्रूते यत्त्वामृगेषा * श्रुतिरपि महतीत्यादरादाश्रितश्चेत्
दीनं राजानमेनं तदपि जलधरैः प्राचि नीचे रुणत्सि ॥४०॥

वागुरा ।

बहुगुणगणपूज्या त्याज्यभागोज्झिताङ्गी
धवलविमलदेहा धीवरस्कन्दवाहा ।
चपलनयनरम्या चारुतीर्थैकगम्ये-
त्यनिमिषमनुयातं वागुरे हंसि धिक्त्वाम् ॥ ४१ ॥

---

* श्रुत्यां दिशां प्राची महती दिक् उच्यते ।

रसना ।

रक्ता रसार्द्रा रुचिरा रसज्ञा
रम्यस्वभावा रमणीयहावा ।
इति द्विजाश्चेद्दधुरन्तरेतान्
दुर्भाषया धिग्रसने भिनत्सि ॥ ४२ ॥

शाखा ।

सुखस्पर्शच्छाया सुपथसततस्था सुफलिनी
द्विजश्रेणीगीतश्रुतिसुभगनादा नतशिराः ।
सुमाधुर्याभ्यासा भ्रमरहितवृत्त्येत्यतिथयः
शयेरन् चेच्छाखे पिपतिषसि तेषामुपरि धिक् ॥४३॥

अटवी ।

सुगूढाशा सूनस्तबकसुभगा बन्धुरशिखा
द्विजव्राताधारा द्विपमदभरामोदमधुरा ।
श्रितत्राणाऽऽसक्ताश्रमहरणपट्वी त्वटवि हे
मृगोयातश्चेत्त्वां मृगपतिमुखे तं क्षिपसि धिक् ॥४४॥

लहरी ।

प्रसन्नमधुराकृतिः प्रकृतिशीतला ऽच्छाशया
प्रफुल्लकमलानना प्रकटहंसमन्दस्मिता ।
मनोज्ञकलभाषिणी मसृणिताङ्गभङ्गेत्यनु-
वजन्त्यनिमिषं लहर्युपरुणत्सि जाले कथम् ॥ ४५ ॥

सूची ।

निष्कासयस्यखिलकण्टकमानतानां
सक्तं सदा वहसि दृष्टिपुटे ऽतिऋज्वी ।
नो मुञ्चसीत्यनुसृतो यदि तं गुणाढ्यं
बध्नासि सूचि कथमम्बर एव तन्तुम् ॥ ४६ ॥



तुला ।

गुरुलघुविवेकव्याख्यानं त्वयि प्रथते परं
सकलविदिता षाड्गुण्यश्रीः स्फुरत्यतिमात्रकी ।
समविषमयोः सर्वेषां त्वं प्रमाणमिति स्थितं
नयसि नितरां नीचैर्धिक्त्वां सुवर्णमणिं तुले ॥ ४७ ॥

नौः ।

अपाराकूपारोत्तरणचणसंचारचतुरा
दिगन्तेभ्यो दिश्यान्युपनयति वस्तून्युपगता ।
पृथुश्रोणी पूर्णा वसुभिरिति सांयात्रिकवरे
समुत्कण्ठे मज्जेत् पवनपरिरब्धा तदपि नौः ॥ ४८ ॥

शृङ्खला ।

सुवृत्तशतगौरवा श्रुतिमनोज्ञशिञ्जारवा
सुवर्णललिताकृतिः सुखयति स्पृशन्तं भृशम् ।
कृतप्रणतिराश्रितेत्यथ पदं दधौ चेद्द्विपः
क्षणेन ननु शृङ्खले तमिह पर्यबध्नाः कथम् ॥ ४९ ॥

वर्तिः ।

धवलधवलदेहा धौतपर्यन्तगेहा
बहिरहनि न दृश्या भासुरास्या निशीथे ।
बहुसुगुणगणाढ्ये त्वाप्लुवेतात्मना त्वाम्
तदपि दहसि वर्ति स्नेहमाप्तानला धिक् ॥ ५० ॥

पौत्रं लिङ्गार्यवर्यो द्विजकुलतिलक स्तिम्मपार्यस्तनूजं
भारद्वाजः कुलीनं मुनिपतिरवनिः स्वंच नारायणोदा ।
आशीर्भिः सत्यवाचो यमिह भुवि शिशुं वर्धयामासुरार्याः
श्रीकण्ठः सोऽभिधत्ते भवदुपहृतये श्राव्यमन्योक्तिकाव्यम् ॥

---

# ॥ मन्मथमादनाख्यो भाणः ॥

यस्मिन् धातुष्कधुर्ये त्रिणयनहृदयं पूर्ववैरानुबन्धा-
द्राढं भेत्तुं प्रवृत्ते सति सुमविशिखैस्स्वार्धदेहं विभिन्नम् ।
दृष्ट्वात्मानं जुगोप द्रुततरमबलामिश्रदेहः पिनाकी
तार्तीयीकीप्रकृत्याश्रयणमभिनयन् पात्वसौ पञ्चबाणः ॥ १ ॥

टीका ॥ त्रिणयनत्वं विरोधकारणं सुमविशिखोक्त्या बलिनस्तृणमायुध
मिति सूच्यते । पूर्ववैरशब्देन शङ्करपार्वतीकल्याणे स्वस्योज्जीवनानन्तरमि
ति ज्ञायते विभिन्नमित्यनेन संयोगपूर्वकाले पार्थक्येन स्थितिस्सूच्यते । अ
र्धशब्देन अर्धो वेति श्रुत्यर्थानुवादः मिश्रत्वकथनेन एकीभूय गाढाश्लेषस्सू
च्यते जुगोपेत्यनेन वशिनोपि महादेवस्य मदनबाधाधिक्यं वर्ण्यते तार्तीयी
कीत्यनेन कामवीरात् भीतत्वं सूच्यते अभिनयन्निति निसर्गषण्डत्वपरिहार
पात्वित्यनेन सर्वदेवेभ्यः कामस्योत्कर्षः एवं च शृंगारस्य स्थायिभाव
रसेष्वस्य रसस्य जगद्वृद्धिसाधनत्वात्प्राथम्यं रसवृद्धेश्च मदनहेतुकत्वा
मदनस्य जगत्कारणत्वं मदनो न दुष्टदेवता सर्वैरपि स्वकृत्यदोषः विष्णु
द्रादिष्वप्यारोप्यते ।

धृत्वा मूर्धनि तत्प्रियं शशधरं मीनेक्षणामीश्वरीं
स्वार्धाङ्गीकृतविग्रहां च दधता तां तत्पताकामिव ।
सख्यं प्रेष्यतया सहैववहता फालेक्षणेनाश्रितः
संधेर्विक्रमणोन्मुखो विजयते श्रीगर्भजातो रथी ॥ २ ॥

नान्द्यन्ते सूत्रधारः ।

शृङ्गाररसभृंगारावंगनास्तनशृङ्गिणौ ।
सङ्गिनामङ्गिनामङ्गीकुरुतां सङ्गमङ्गलम् ॥ ३ ॥

( इति पुष्पाञ्जलिं विकीर्य नेपथ्याभिमुखमवलोक्य । )

मारिष इतस्तावत् ।

प्रविश्य

पारिपार्श्वकः— भाव अयमस्मि ।



सूत्रधारः—मारिष अस्मद्भाग्यस्य अहो परिपाकरमणीयता ।
यदिह निखिलनिगमान्तान्तःकरणपेटिकानिगूढनिक्षिप्तनिरवधिककल्याणगुणमणिगणस्य कन्दर्पजनकस्य जगतां पितुश्श्रियः कमितुः स्वविहारानुकूलसर्पतरङ्गिणीकूलविलसन्निलयस्य स्वाभिन्नमपि दशमुखवधाय दशरथसुतात्मनाऽवतीर्णं जानकीजानिं प्रसन्नराघवमपि गजेन्द्रसंरक्षणकर्मैतदुभयोः साधारणमिति भक्तानामभेदप्रतिपत्तिदित्सयेवानेतुमागतस्य भगवतस्सत्यगिरिनाथस्य चैत्रचैत्रीयात्रामहोत्सवे रङ्गमण्डपमलंकुर्वन्ति वेदशास्त्रपारीणा रसिकधुरीणा स्सभासदः ।

( तदद्य गीयतां तावत् वसन्तसमयमधिकृत्य सङ्गीतकम् । )

पा०— अहमहमिकयैवामूलफुल्ला रसालाः
सविधगतमिलिन्दान् स्वैर्मरन्दैरमन्दैः ।
प्रतिदिनमिव जप्तून् तर्पयन्तस्समन्तात्
स्मरविजयसहायेऽस्मिन्वसन्ते लसन्ति ॥ ४ ॥

सू०— अहो भवद्गानेन आलेख्यसमर्पितेव सर्वतस्सभा अलमलमतिविलंबेन सरसेन केनापि रूपकेण सभां समाराधयामः ।

पा०— तत्रभवता भवता अचिराध्यापितोऽभिनवनिर्मितो भाणः स्मृतिपमार्थधेराहतीदानीं

सू०— स केन निर्मितः ?

पा०— कूटस्थोऽजनि चोक्कनाथमखिराद् यस्यान्वयेऽनामये
राज्ञः प्राज्ञसदस्स येन सुचिरात् संलभ्यते मानना ।
सुब्रह्मण्यविपश्चिताऽतिसरल स्तेन प्रणीतो गुणी
ख्यातो मन्मथमादनाह्वयतया भाण स्तथोज्जृंभते ॥

सू०— सानन्दं अतिसरस एवायं यतः ।
भाणोयं भाति दुग्धाब्धिः शृंगारामृतकारणं ।
दुग्धोदधौ हरिश्शेते जागर्तीह तु तत्सुतः ॥ ६ ॥

पा०— अहो भावस्य वचनचातुर्यं ।

सू०— अग्रतो विलोक्य रसिकशेखरभूमिकामादाय इत एवाभिवर्तते मम स्यालः यएषः ।

कौसुम्भं परिधाय सूक्ष्मवसनं प्रालंबदीव्यद्गलः
गायन्नस्फुटवर्णमेव मधुरं किंचिच्चलच्छेखरः ।
कुर्वन्नंगुलियुग्मतः प्रतिकलं तालप्रमाणं जवात्
कार्योद्युक्त इवेक्ष्यते परिमलेनामोदयन् सर्वतः ॥

तदावां उपरितनकरणीयाय सज्जीभवावः । (इति निष्क्रान्तौ)

इति प्रस्तावना ।

ततः प्रविशति रसिकशेखरः ।

रसि०—सुप्तप्रबुद्धः नयने निर्मृज्य अहो प्रभातप्राया शर्वरी ।

अद्य खलु विलासवत्याः दुहितरमभिनवतारुण्यालंकृतां लावण्यवतीं संभावयितुं तत्रभवता प्रियसुहृदा सन्निधातव्यं चित्रापूर्णिमायामिति समाहूतोऽस्मि ।

एतावन्तं कालं स्वभार्ययेवानार्यया निद्रया बलान्निरुद्धेन मया सर्वं विस्मृतं । सा तु कालातिपातं न सहेत भगवान् दिवसश्रीवल्लभः भास्वान् उदयाचलशिखरमारूढः यथा प्रतिश्रुतमंभोजिनीस्संभावयति विकाससरसाः । (सर्वतो विलोक्य)

किं खण्डानि दिनेशभिन्नतमसां बीजानिवोप्तान्यह-
श्श्रीनेत्रांजनभाजनानि किमु वा मारानलान्निस्सृताः ।
इंगालाः किमु मान्मथं किमयशोजातं स्वचेष्टोद्भवं
ये गेहोपरि चत्वरेषु च लसन्त्यानीलदेहा इमे ॥ ८ ॥

(निरूप्य) अहो प्रभातपिशुना वायसाः खल्विमे । (कति चित्पदानि गत्वा)

एषा श्वेतनदी चकास्ति सुचिरादन्येव भागीरथी
तीरेऽस्या भगवन्निवेदनकृते ते नालिकेरद्रुमाः ।



स्वादून्यद्य फलानि किन्तु दधते भक्ता इवात्तादराः
किं क्रोशन्ति गजेश्वरार्त्यसहनाः वाताहता शिंशुपाः ॥ ९ ॥

किञ्च—

जनैः स्समाध्यासितसैकतेयं
सरित्स्रवत्स्वादुपयःप्रवाहा ।
प्रजासमाक्रान्तनिजाच्छतल्पा
पयस्विनी योषिदिवाद्य भाति ॥ १० ॥

अपिच—

स्वच्छा भृशं सागरधर्मपत्नी
यान्ती निराराविमतीव नीचैः ।
साध्वीव सा राघवसन्निधाने
सङ्कोचमेतीति विभाति नृणाम् ॥ ११ ॥

अस्या उत्तरतः—

प्रसन्नरघुनाथपुर्यमरभासुरै र्भूसुरैः
प्रसाधितसुवीथिका जनकजेशगेहोज्ज्वला ।
विसारिसततोल्लसत्प्रभविमानशृंङ्गोन्नता
भृशं हरति मे दृशं निखिलगीतसाकेततः ॥ १२ ॥

किञ्च—

क्षेत्रेऽस्मिन् प्रणतावनाय निवसन् सौमित्रिणा सीतया
वृत्रारिप्रमुखामरौघशुभकृ च्छ्रीरामचन्द्रो विभुः ।
क्षात्रं धर्ममनुष्ठितं प्रकटयंश्चापेन रोपेण च
श्रोत्रानन्दकराभिधानमहिमाऽयोध्यां च न ध्यायति ॥ १३ ॥

(श्रवणमभिनीय)

किमेतत् घनगर्जितमिव श्रूयते । (निरूप्य)

शिंशुपावाट्यां स्थापितेषु कुथास्तीर्णेषु गजेष्वयमेको मतङ्गजो निषादिनमविगणय्य भ्रममाणः शरस्तंबाशया धावति ।

योयं,—

शुण्डादण्डविधूतशीकरचयः पार्श्वद्वयेऽपि स्वनद्-
घण्टो वेगविशीर्णसैकततलः कर्णोच्चलच्चामरः ।
कण्ठाधिष्ठितयन्तृमानसमपि श्रीनायके प्रेरयन्
गण्डोद्भूतमदो गजो जनगणं हा भाययत्यागतम् ॥ १४ ॥

( अन्यतो विलोक्य )

आयान्तं खगराजकेतनमिमे दृष्ट्वेव हृष्टाशयाः
स्वच्छन्दा श्शुकशारिकाप्रभृतयः कूजन्ति कुञ्जद्रुपु ।
मन्ये शब्दमिमं तु बालगलजं भाषाविशेषध्वनिं
किं च भ्रामरआरवो वितनुते वेदानुवादभ्रमम् ॥ १५ ॥

( कतिपयपदानिगत्वा पुरतो विलोक्य )

नानाकारतया करीन्द्रवरदः यात्रोद्यतोऽभूदयं
पर्याप्तोऽस्य न धारणेऽहमिति किं वीशो बहुत्वं गतः ।
भासन्ते गरुडा यदत्र तटिनीतीरद्रुमाणां ततौ
कार्यैकाग्रमतित्वमेत्य पुरत श्श्रीशप्रतीक्षा इव ॥ १६ ॥

नाट्येनपरिक्रम्य । ( यथोद्देशं प्राप्तोस्मि )

कडयकुडीति शुभनामभूषिता
सुविचित्ररायरघुनाथपुर्यहो ।
नवसालनामपुरनाथमानिता
वितता विभाति धवलापगातटे ॥ २७ ॥

नदीमध्यं विलोक्य ।

कस्येयं सौवर्णकलशविलसिता अभ्रंलिहाग्रा शाटीकुटी । ( राजकीयैव स्यात )

अये सकलशास्त्रसारवित् देवेन्द्रइवानन्तामरमाननीयः श्रीमान् राम इ चन्द्रमहाराजः भगवद्दिदृक्षया सपरिवारः छत्रचामरादिबिरुदै स्समं एवागच्छति । अहो अस्य दशरथरामस्येव परार्थैकप्रयोजनता ।

## ॥ मन्मथमादनाख्यो भाणः ॥

(पूर्वप्रकाशितात्परम्)

तथाहि—

सम्मानदानजनिरस्य हि कीर्तिवल्ली
नूनं सुधाकरमनोज्ञफलं प्रसूते ।
काले द्विजा रसभुज स्तृषिता श्चकोराः
हृष्टा वयोभि रमितै स्सह पर्यटन्ति ॥ १८ ॥

टीका ॥ अनेन अगतिकानां गतिरयमेवेति सूच्यते तत्रापि भृशं द्विजोपकारिता च । ( इति परिक्रामितकेन विलोक्य )

अत्रत्यान् सर्वाननुगृहीतुं सत्यगिरिनाथस्सन्निधत्ते आयान्तं तं प्रसन्नराघवः प्रत्युद्गच्छति ।

अहो श्रीकान्तरूपमिन्द्रियासेचनकम् ।

गाढं संवलितेन भक्तिगुणतो वृद्धेन चात्मोद्यमैः
धीरैर्मानसमन्दरेण मथितात् यद्वेदशास्त्रांबुधेः ।
युक्त्यैवावहितै स्समुद्धृतमिदं चित्रं हि दिव्यामृतं
तच्चक्षुश्रुतिवक्त्रपाति जनयत्यात्यन्तिकीं निर्वृतीम् ॥१९॥

इति नमस्कुर्वन् अन्यतो दृष्ट्वा ।

सरिदुपवनमेत्योद्दामदीक्षा महोक्षाः
हुमिति परिणदन्तः स्वच्छकायास्सजायाः ।
निजखुरपुटघातक्षुण्णतीराः प्रधीराः
तटभुवि विचरन्त्युत्क्षिप्तवालं सलीलम् ॥ २० ॥

( पुरतो विलोक्य )

इतो माकन्दवाटिकापरिसरे वेशवाटोऽयं विकटो विटकुलशकटीशतसंकुलः लक्ष्यते । ( प्रविशामि यावत् ) ।

प्रविश्य ।

तिष्ठत्येषा मोहनाङ्गी अभ्रंलिहशुभ्रसौधस्य चूतपल्लवमालालंकृतस्य स

कदलीस्तंभस्य गृहस्य द्वारि ।

अत्र हि ।

मणितमनुरणन्तीवात्तबोधाः कपोताः
सुरतवचनशीला भान्ति कीलाः सहेलाः ।
मुरजनिनदहर्षात् नृत्तशूरा मयूराः
बहिरुषसि दलन्ते ताम्रचूडा स्वनीडात् ॥ २१ ॥

"वशीकृतवारिएनां संभावयामीति उपसृत्य तस्या अञ्जलिमङ्गीकुर्वन् "वशीकृतवारिमानसा" भवेत्याशिषं प्रयुज्य ।

ग्राह्यं स्मरेण सार्धं ते त्र्यक्षोऽद्राक्षीद्यदा न तम् ।
तथा यदि कथं वा स्यात् कामे वामाक्ष्यनङ्गता ॥ २२ ॥

स किं करोतु नाम त्वां तदानीमेवासृष्टवतः विधातुर्दोषोऽयम् ।

अस्याः पार्श्ववर्ती कुसुमशेखरः किं ब्रवीति ।

यत्सूच्यते त्वच्चाटुवचनेन बालैषा लावण्यातिशयेन गिरिराजसुतामप्यतिशेते ततस्त्रिलोचनमपि वशयितुं समर्थेति तत्सारज्ञो भवानिति ।

( भवत्वन्यतो गच्छामीति परिक्रम्य )

किन्नु खलु विलासिनीदासः कमलाक्ष्याः मात्रा चूडाग्राहं गृहीतः प्रलपति ।

हन्त हन्त गतिमात्रमंथरा विश्वकद्रुसमताधुरन्धरा ।
कंपिता श्रितसकंपकन्धरा वष्टि मातृजरठा वसुन्धराम् ॥ २३ ॥

भवतु पृच्छाम्येनं अरे रे भूमिं ददामीति त्वया कथितं वा नवा ? किं वदसि ? नैवेति ? भवतु ।

अयि जरठे किं ब्रवीषि स्वहस्तलिखितं पत्रं तेन दत्तमिति ।

( पत्रं संगृह्य विलोक्य च )

अरे मूढ,

तालीपत्रं स्वकरलिखितं साक्षिलेख्यै रुपेतं
भूभृन्मुद्रांकितमतिदृढं सार्धहस्तप्रमाणम् ।
जागर्त्येतन्ननु तव कितव भ्रंशने कोऽप्युपायः
सुप्तो भोगी स्वकरविधृतः किन्न्वदष्ट्वा प्रयायात् ॥ २४ ॥



तन्मानृतं ब्रूहि ।

बालैषा भाग्येन लब्धा तदस्यै भुवं सर्वां निश्शङ्कं प्रयच्छ कमलाक्षी त्वन्मृदमादाय त्वत्कबळाय दद्यात् ।

इत्यन्यतो गत्वा ।

इतः प्राभातिकवायुं सेवमाना चन्द्रमुखी सुरतश्रान्तेव लक्ष्यते ।

अस्याः खलु

वामं निवेश्य च भुजं मृदुलोपधाने
संगृह्य दक्षिणकरेण कटिं स्वपन्त्याः ।
वेणीक्ष्यते धवलवेश्यधिपार्श्वलम्बा
गाङ्गाविगाहियमुनाजलवेणिकेव ॥ २५ ॥

अस्या निद्राविलसितं विलोकयन् प्रियदर्शी अनिमिषतया वर्तते। वारविलासिनीनां प्रभावः खल्वेषः। अतएव स्वस्त्रियोऽपि स्वस्त्रियो न रोचन्ते विटजनेभ्यः ।

साधु प्रियदर्शिन् साधु। इत्यन्यत्र गत्वा ।

सङ्गीतरसिकः खलु कलकण्ठ्या स्वकाशे वितीर्णकर्णो वर्तते। अत्र हि।

स्वगीतिरधिरोप्यते चतुरयाऽनया वल्लकी-
गुणेषु मृदुलांगुलिप्रकरचालनेन द्रुतम् ।
अहं किल विलोकये तदधिरोहणायोचितां
स्वराङ्कणशलाकिकाविततिमत्र निश्रेणिकाम् ॥ २६ ॥

अहो वीणागानस्य माधुर्यं ततोऽप्यस्याः कण्ठगीतेरिति सर्वं रसिकजनभागधेयम् ।

इति परिक्रामन् ।

सुमांग्या भवने तरळतरतारकं सखायं मरन्दलोलुपं विलोक्य ।

सप्रेमदामविनिबद्धतनुस्सुमांग्या
वीक्षाकशाभिनिहतः शपथं करोति ।
न त्वां विहाय वनितान्तरगोचरोऽहं
मिथ्याऽत्र चेद्दहतु तन्मदनानलो माम् ॥ २७ ॥

इति कथं तां भीषयसि एवम्भूता बहवोऽहीति विहस्यान्यतो गत्वा । इयं किल मदिराक्षी स्वसौन्दर्यगर्विता तिष्ठति । (तथाहि)

मुकुरे विलोक्य मुखमिन्दुमण्डलं
चिकुरं निरीक्ष्य तिमिरं निरन्तरम् ।
स्तनचक्रवाकयुगलं प्रगेऽपि सा
घनकञ्चुकेन शनकैर्निगूहति ॥ २८ ॥

तत्परिसरे मदनमोहितो जारशेखरो दृश्यते । (सपरितापम्)

जारं वारविलासिनीविरचितस्वांतभ्रमैर्विभ्रमैः
धीरोदारनिजावलोकलहरीमग्नं बतालंबताम् ।
मारः कारुणिकाभतां प्रकटयन् पौष्पैः शरैः पेशलैः
स्वैराकारसुमैश्शिलीमुखसमैः किं हन्ति तं यन्त्रितम्॥

इत्यन्यतश्चलन् शफराक्षी प्रियनिवेशितमानसेव निरीक्ष्यते ।

स्मारं चरितमसह्यं स्मारं स्मारं भियेव शफराक्षी ।
निक्षिपति मतिं सख्यौ चोरभिया ज्वलदगारइव वस्तु ॥३०॥

कथं स्मृतमात्रस्सन्निधत्ते कमलिनीरसिकः । (किं भणति)

अयि मलयगिरीन्द्रादेत्य निश्वासगंधं
तव मुहुः अभिजिघ्रन् लज्जया स्विन्नगात्रः ।
स्खलितपद इवैति प्रांतपुष्पद्रुलीनः
विदहति भवदीयान् स्पर्धया गंधवाहः ॥ ३१ ॥

इति । अरे तस्याः पादयोर्निपत का गतिः ? इत्यन्यतो गत्वा । कमलिनीखल्वेषा अविशदमनोजा या ।

किञ्चित्कुञ्चितलोचनाऽधरदलांतर्दृश्यमानस्मिता
तारुण्यागमनानभिज्ञहृदया श्रोणीभरेणालसा ।
लज्जातर्जितविभ्रमा कमलिनी शृङ्गारमङ्गारव-
त्पश्यन्ती प्रसुवा विनीयत इव द्वार्यस्ति शीर्यत्त्रपा ॥३२॥

सामोदम् ।



कमलिनीवदनस्तनकुड्मलद्वयविलोकनमात्रसुखी सखा ।
अनुभविष्यति सङ्गसुखं ततो मधुपशेखर एष चिरं कृती ॥३३॥

कथमियं कान्तिमती सचिन्तेव लक्ष्यते । (इत्यन्यत्र गत्वा)

साचीकृताननमुपर्यभिवीक्ष्य किंचित्
वाचं नियम्य शनकैरवधानमेत्य ।
ध्यायत्यसौ प्रियतमं प्रणयापराद्धं
तां दण्डयत्युचितमेव मनोजराजः ॥ ३४ ॥

इत्यन्यत्र परिक्रामितकेन विलोक्य ।

रत्युक्तया रसनिधिः प्रणयापराधात्
संदानितो रशनयाऽतिविलंबहेतोः ।
अस्या वशो हि भवतीति किमत्र चित्रं
मत्तो गजोऽपि महिलावशतां प्रयाति ॥ ३५ ॥

इत्यन्यतो गत्वा अम्बुजाक्षीगृहसम्मुखीभूय ।

रथ्यानिरोधिनयनप्रसरांबुजाक्षी
पिद्रेन्द्रमार्गणपरा खलु दृश्यतेऽद्य ।
अस्याः कटाक्षविशिखाः सुगवाक्षरन्ध्र-
संप्रेरिता अनपराद्धतया जयन्ति ॥ ३६ ॥

तत एव कार्यान्तरव्यापृतमपि मां स्थगयति तद्विलासविलोकनविलसितं भवत्वेनां सम्भावयामीत्युपसृत्य समागतं पिद्रेन्द्रं विलोक्य । पश्य तव नायिकां

अधरीकृतोऽपि तमसा विधुरयमधिकं विभाति चित्रमिदम् ।
तद्विजयि तम इतीदं चित्रतमं किमिति शक्यते वक्तुम् ॥३७॥

किं ब्रवीषि अस्या वदनस्य चन्द्रसादृश्येन चिकुरनिकुरुम्बस्यान्धतम-सादृश्येन च भृशं प्रमोदे इति भवतु सुखी भवेत्युक्त्वा अन्यतो गत्वा विलोक्य किमेतत् ।

तटिदुपरि घनौघं मध्यभागे विहायः
शिखरियुगलमेषा कापि पीनातितुङ्गम् ।

विमलमपि हिमांशोर्मण्डलं क्वापि धत्ते
सुरुचिरजलजातान्युत्पले क्वापि चित्रम् ॥३८॥

उपसृत्य तव कामिनीमणिरिति युक्तमिदं नाम । (यतः)

चन्द्रकोकसरसीरुहाणि च ज्योत्स्निकान्धतमसे च कामिनि ।
त्वय्युपेत्य सखितां परस्परं कल्पयन्ति सुखितां दृशोर्मम ॥३९॥

इति तां श्लाघमानः अन्यतो गत्वा प्रणयकुपितां भ्रुकुट्या तर्जयन्तीं मदयन्तीं चमत्कृत्या सान्त्वयति मदनदासः (यथा)

जपासुमसमा ऽधरे मदनकातरं सादरं
मनोभुवि निवेश्य मां तव कटाक्षतो रक्षितम् ।
विलोक्य स यशश्च्युतिं सपदि शङ्कमानो मनो-
भवो नमयतीव ते ध्रुवमनम्यनाम्यं धनुः ॥४०॥

निर्वर्ण्य

शृङ्गारयोनिजयहेतिरियं मनोभित्-
साङ्गारपावकशिखा किमदाहकर्त्री ।
शृङ्गारदुग्धजलधिप्रभवा सुधा किं
नांगस्यरीति रियमित्यवधार्यतेऽस्याः ॥४१॥

तमुपसृत्य

चन्द्रं ह्रेपयति त्वदीयवदनं लावण्यनिष्यन्दतः
तस्मात्तस्य सुधां वचांसि रसतः विद्रावयन्त्येव ते ।
मेघं भ्रामयति त्वदीयकवरी नैल्येन जित्वा स्वयं
तस्मात्तत्तटितं निलाययति ते कान्त्या वपुस्तत्क्षणात्

किञ्च

चापस्य भङ्गे किल वीरलोकः प्राप्नोति भङ्गं नहि चित्रमेतत् ।
त्वद्भ्रूधनुर्भङ्गमुपेत्य मारः पुंसो जयत्यद्भुतमेतदेव ॥४३॥

मायिनां स्तावकता नैसर्गिकी नाम इति तया सप्रणयं परिहसितः क-
न्तिमत्याऽऽकारितः (तां विलोक्य)



अहो अनन्यसुलभेयमाकृतिः ।

तथाहि ।

धात्री विद्युदियं प्रवर्षति सुधां मत्कर्णयोर्वाङ्मयीं
तत्त्यक्त्वा ऽशनिकारणं स्वतटितं कादम्बिनी मां श्रिता ।
वृष्टेः कारणतामवेक्ष्य तटितो पूर्वामियं लज्जिता
स्वान्तः किं घनपुष्पमाकलयते धम्मिल्लतामास्थिता ॥४४॥

किञ्च ।

अवाग्वद्धेऽपि तन्वंग्याः केशभारे ऽस्ति गौरवम् ।
मलिनत्वेऽपि सस्नेहः शिरस्येव स लाल्यते ॥४५॥

इति वर्णयंस्तां उपेत्य तन्नायकस्य कुशलं पृच्छन् तत्समयसमागतं तमेव निजवयस्यं सिंहसंहननं वयांसि ते शतमिति सन्तोष्य कतिपयपदानि गत्वा । उपरि वीक्ष्य । अहो सूर्यो ललाटन्तपो भवति इमामातपवेळां नाळिकेरक्रमुकरसालजालसञ्छादितातपे रत्नावल्याः अतिमनोहरे विहारे अतिवाह्य तस्याः प्रियतमं मणिभूषमप्यभिनन्द्य यथाभिलषितं साधयामीति तत्र गत्वा ।

(सखे मणिभूष)

न सहेत प्रियाङ्गस्य ग्लानिमेष इति द्रुमाः ।
ददत्यनातपं सर्वे द्युमणिं परिभूय हि ॥ ४६ ॥

किञ्च

रत्नावलीं विलोक्यैव लज्जिता त्वामुपाश्रिताम् ।
प्रतीच्यां प्रस्थिता छाया तरुमूलमुपागता ॥ ४७ ॥

किं ब्रवीषि सर्वं भवतस्सन्तोषायेति भवत्विति अत्र किञ्चित्कालं विश्रम्य ततो ऽन्यत्र गत्वा । (किमिदमिहाद्भुतमिव दृश्यते)

धृत्वाऽर्धोरुकमात्मबाहुशिखरं संताड्य केचित्क्षणात्
वेगादेत्य पदानि कानि चिदिमे मत्ता महोक्षा इव ।
उत्प्लुत्यांबर एणवत् भ्रमरवत् बंभ्रम्यमाणा अवाक्
भूमिं प्राप्य पुनस्सलीलमधुना विस्माययन्तीक्षकान् ॥४८॥

अन्यतो दृष्ट्वा इतो वृक्षवाटिकायां कुकुट्युद्धं दृश्यते । (तथाहि)

कुञ्जे पुञ्जीभवन्ति कचिदिह वृषलाः येन केनापि तेषां
बध्वा मध्ये जनानां पणमनवधिकं संविदा संविसृष्टः ।
शब्द्यन्नुद्धूतपक्षो मुहुरधिकजवादुत्पतंस्तब्धरोम
सामर्षस्ताम्रचूडः प्रहरति विमतं सायुधस्सांयुगीनः ॥४९॥

इति विष्किरकलहकुतूहली स्थलान्तरे मेषयुद्धं विलोक्य ।

गळशृङ्खलिकां द्विधा विधाय प्रबलत्वादिति धीरधीरिदानीम् ।
विविधाभिनदद्विषाणभूषस्त्वजमाजाववहन्ति मेष एषः ॥५०॥

इति पश्यन् कतिपयपदान्तरे फणिभिः क्रीडन्तं जनैरहमहमिकया विलोक्यमानमाहितुण्डिकं कंचिदुपसृत्य अहो एषः अष्टानां नागानां मध्येऽपि स्वबालकानां मध्ये स्थित्वा सादरं भक्ष्याणि यच्छन् पितेव सानन्दं मुष्टिविशेषं प्रदर्शयति तेष्वेकः तत्करे किंवास्तीति दिदृक्षुर्बालइव सकुतूहलमु[त्तिष्ठति] ।

तथाहि ।

भुवि वलयितचलवालः दिवि दण्डवदुत्थितश्च फणिवालः ।
निश्वसिति फणविशालः शश्वद्रोधकुधा यथाभीलः ॥५१॥

अपिच ।

मणिमन्त्रौषधवीर्यं भणितुं स्वयमनवधानमभिनीय ।
फणिनाऽष्टमेन दष्टे विनिधत्ते विषशिलामसौ स्वकरे ॥५२॥

किञ्च ।

फणविनिहितमणिरन्यो गणयत्यणुमपि धराधरंस्तिमितः ।
गण एष वीक्षकाणां क्षणविस्मित एव भवति तत्ववित् ॥५३॥

किञ्च ।

कुप्यति सर्पो मानी व्याळग्राही करोति तत्सामानि ।
हृष्यन्त्यपि लोमानि स्मरतामपि साध्वसेन यन्नामानि ॥५४॥

किञ्च ।

अहहाहितुण्डिकाक्ष्णोः वर्तिभ्यामिव तदीयरसनायाम् ।
अयमुरगोऽञ्जनलेपं विवृतफणस्सादरं करोतीव ॥५५॥

(क्रमशः)

॥ मन्मथमादनाख्यो भाणः ॥

(पूर्वप्रकाशितात्परम्)

अपिच ।

नृत्यन् भोगिसमूहे नववत्प्रतिभाति कृष्णसर्पोऽयम् ।
धावति पराग्यदृशो विधृतोऽपि करेण कुपितबाल इव ॥५६॥

अपिच ।

उरगाविमौ फणाभ्यां पुरतो यन्तुः करौ तिताडयिषू ।
त्वरया करापसरणात् धरणिं शिशुवत्करेण ताडयतः ॥५७॥

एवमेव तत्र तत्र वारविलासिनीरभिनन्द्य अद्भुतानि च पश्यन् रसिकशेखरः सफलकदळीतरुपरिमण्डितं चूतपल्लवमालिकासमलंकृततोरणं आदर्शमयभाजनभासुरदीपिकाजालमहोमयकल्याणशालं मल्लिकामागधीकुसुमसौरभघुमघुमितान्तरं कुंकुमचन्दनताम्बूलफलादिमङ्गळद्रव्यसंकुलं चटुलपरिजनं विलासवतीगृहमिदमेवेति अन्तःप्रविश्य ।

अहो नवार्तवमहोत्सवे बालेयं लावण्यवती तिलोत्तमेव तुलारहिता समण्डना सावैर्णं भद्रपीठं विभूषयति ।

कळकण्ठ्यः —

सवादित्रं गायन्ति । ममैव भाग्यमिदमिति उपसृत्य । विलासवत्या साञ्जलिबन्धं गन्धादिभिर्मानितः ताम्बूलफलपुष्पाणि गृहीत्वा तामभिनन्दयन् जालमार्गेण चन्द्रमुदितं विलोक्य ।

इह सभाजनचक्रसभाजनं रचयितुं किमु चन्दनभाजनम् ।
विजयिमन्मथपाणिसमार्जितं मुकुर एव नु तत्करमार्जितः ॥५८॥

अहो अनुपममिदं साचिव्यं मृगाङ्कस्य ।

तथाहि—

सोमेन दग्धमवलोक्य निजं सखायं
कार्ष्णिं क्रुधा जनयितुं बहु तेन तुल्यान् ।
गर्भान् कलङ्ककपटेन दधाति सोमः
यज्ज्योत्स्निकाऽस्य महिलामदनान् प्रसूते ॥ ५९ ॥

अहो अस्य शृङ्गारिता ।

चन्द्रश्चन्दनचर्चितैरिव करैस्स्वां कामिनीं यामिनी-
माश्लेष्टुं यतते तदम्बरतलं सन्मल्लिकाकुड्मलैः ।
अद्यालङ्कुरुते वितानविधया सन्ध्या रजन्याः प्रसूः
भृङ्गास्तेन तमोपदेशमिलिताः मिथ्या हि तारा इति॥६०॥

सर्वतो विलोक्य ।

अहो पञ्चशरभिल्लमल्लेन चन्द्रप्रदीपसाचिव्येन शृङ्गारिजनचपलचित्तमृग-चयं गृहीतुं प्रसारितेव ज्योत्स्निकावागुरा (इति लावण्यवतीमुखं विलोक्य । अये जगदानन्दनस्वरूपोऽप्यमृतांशुः अस्मत्सखीसुताया मुखचन्द्रसन्निधौ सौन्दर्यभिक्षामटन्निव गवाक्षद्वारेण करान् प्रसारयति तदेषा लावण्यादि-सर्वसमृद्धिमती । अस्याः किं पुनराशास्यं वर्तते तथापीदमस्तु भरतवाक्यं।

कन्दर्पस्स्वयमोषधीश्वरमहासाह्येन जेजीयतां
तत्सख्येन वसन्त एष जगतां क्षेमाय वो भूयताम् ।
शृङ्गारामृतसेवया युवगणः सर्वत्र मोमुद्यतां
रङ्गश्रीरियमस्मदुन्नतिविधौ मान्यैव देदीव्यताम् ॥६१॥

इति निष्क्रान्तः ।

इति मन्मथमादनाख्ये भाणे प्रथमोऽङ्कः ॥

## ॥ विटविलासोनाम भाणः ॥

अङ्कारूढामभिनवरतौ गोपयन्तीं स्वलीलं
व्रीडाभाराद्विनतवदनां रुक्मिणीं वीक्ष्य कान्ताम् ।
तत्कालार्द्रं यमकृत विधुर्गोपनारीभुजंगः
भूयात्भूत्यै स किल मधुरस्संभ्रमस्सन्ततं नः ॥ १ ॥
जीयाच्चान्द्री स्मरहरशिरश्शेखरी भूतधामा
वामोरूणामविरलसुखाश्लेषहेतुः कलासा ।
भूत्यायस्यास्त्रिभुवनपतिर्मारहन्तापि गौरी-
गाढाश्लेषादविरळमभूदर्धनारीश्वरात्मा ॥ २ ॥

[ नान्द्यन्ते सूत्रधारः ]

( समन्तादवलोक्य )

अहो ! सन्ततनिरन्तरनिरवधिकतन्तन्यमानकलकलरवमुखरितनि-खिलहरिदन्तरमिदं कुरुङ्गनगरम् । तदवलोकये किमिति । ( विभाव्य ) आः ज्ञातम् । अद्यखलु, अखिलनिर्लिपकुलतिलकहृदयकमललालनीय-निस्तुलमहिमललितपदकमलयुगलस्य कमलाकुचाचलतटीवप्रक्रीडापरिणत-मत्तगजमल्लस्य, पार्श्वद्वयविराजिरत्नाकर कन्यकारत्नाकरमेखलावाहुवल्लरी-परिवेल्लितभुजाशिरोभागस्य, कुरङ्गनगरीरमणस्य शंबरारिगुरोर्भगवस्सुन्दरप-रिपूर्णस्य फाल्गुनमहोत्सवसेवनोत्सुकमानसा नानाजनपदसमागता द्विज-मुखाश्शब्दायन्ते ॥

दृष्ट्वा, उद्यन्नहर्पतिरसौ किल मानवाना-
मस्तच्छलादपहरत्यनुसायमायुः ।
जानात्यपीदममतिर्जनतावतेयम्
कान्तोपभोगविमुखा तनुते तपांसि ॥ ३ ॥

अपिच, हन्तामीषामभिमतमिदं चित्रयत्यन्तरङ्गं
स्वस्त्रीलौल्यंसविधविलसत्प्रेयसीर्यद्विहाय ।
हस्तन्यस्तं सरसमधुरं स्वादनीयं रसालं
त्यक्त्वा कोवा लपति धरणौ प्रोच्चशाखाग्रलंबि ॥ ४ ॥

आखेदयन्त्यमीलोका मामकं मानसं सदा
यातानुयायिता येषामविचार्य फलोदयम् ॥ ५ ॥

अतो नटविटपरपाचार्यभरतमुनीन्द्रमतराद्धान्त प्रवर्तनोद्युक्तास्मदे-शिकापाङ्गतरङ्गपरंपरासमासादितनटनकलाविलासैरखिलसहृदयलोकमानस-विहारलोलकळ हंसावतंसायमानैरभिनवैरनास्वादितमानिनीनवीनोपभोगक-न्दळितामन्दानन्दसन्दोहानमून्मानवान् शृङ्गारपाथोनिधिमथनपरिजानित-निरर्गळनिर्गळत्सुधावेणी विलासकामिनीकुचकलशसरभसनिर्भरपरिरंभसंरं-भत्समुल्लसदमृतधारानदीमातृकायमाणरोमांकुरकदंबकरंबितविशालवक्षस्थला नाकलयितुमुत्सहतेऽस्मन्मनः । (क्षणंविचिन्त्य) (सव्रीडं) हन्तकिमिदं प्रवृत्तम् ॥

अज्ञानुद्दिश्य नाट्यानां वेद्यानां रसिकाग्रगैः ।
सन्दर्शनमितीदं न उद्भावयति गर्हणाम् ॥ ६ ॥

अथवा, अनङ्गमाराधयतां जनाना-
मस्मादृशामर्हमतीव चैतत् ।
सर्वानपिप्राणिगणान्यदस्म-
त्प्रमुर्नयत्यात्मशरव्यभावम् ॥ ७ ॥

(किञ्चिद्दूरतो निरीक्ष्य सहर्षं)

आयाताः कतिवाजना मम परन्त्वेषैव भाग्योन्नति-
स्सत्सङ्गीतकलाकलाफलसिताः कामागमानां भुवः ।
सारासार विवेकिनस्सहृदयाश्शृङ्गारमूर्ती इव
संभूता ममनृत्तकौशलममी द्रष्टुं यदाभ्यागताः ॥ ८ ॥



तत्त्वरयति नस्संमोदो नटनकर्माणि । कथं चिरयति मारिषः । (नेपथ्याभिमुखमवलोक्य) (सू) मारिष चिरविळंबनेन नः प्रमोदप-रिपन्थी माभूः । (मारिषः) (ससंभ्रमं प्रविश्य) भाव, एषोऽस्मि । ज्ञा-तुमभिवाञ्छति प्रमोदकारणमयं नजः सूत्रधारः किन्नाद्यापि जानासि शृणु ॥

कामिन्याः कुचकुंभकुङ्कुमरसैर्जात्वप्यनार्द्रानिमा-
न्विप्रादीन्स्मरवेदसारपिशुनैर्नृत्तक्रियाकौशलैः ।
कान्तापीनपयोधरैकरसिकान्कर्तुं प्रवृत्तस्य मे
नृत्तं द्रष्टुमुपागतास्सहृदयास्तन्मोद उज्जृंभते ॥ ९ ॥

(मारिषः) युक्तमेवैतदार्यस्य । तथाहि ॥

मलयाचलसंजातमन्दमारुतसन्ततेः ।
तरुणाभ्यर्णसञ्चारः सफलः प्रथितङ्खलु ॥ १० ॥

(सू) अस्त्वेतत् अपिपरिशीलिता नाट्यसामग्री ।
(मा) किमिदानीं परिशीलनं शिक्षितपूर्वा खल्वेषा दृढं भावेन ।
(सू) मैवं भाणीः पश्य ॥

कामं प्रसाधनशतैरपि भूषिताङ्गी
केळीगृहाय गमनावधिगात्रवल्ली ।
कान्तस्यतृप्तिविधये कमनी पुनश्च
किन्नप्रसादयति मारिषभूतले ऽस्मिन् ॥ ११ ॥

(मा) केनपुनारूपकेणैतान्संभावयति भावः ।
(सू) यद्भवते रोचते । (मा) (क्षणंविचिन्त्य) ।

पुरातनानां बहुशः कवीनां दृष्टप्रयोगा जनता कृतीनाम् ।
ततोनवीनं सरळार्थबन्धं दृश्यं मनोहार्यभिनेयमद्य ॥ १२ ॥

सूत्रधारः (ससंभ्रमाह्लादं) हन्त स्मारितो मारिषेण नूनमावर्जितैव सभा । यथावा ॥

यस्मिन्सद्गुणसंहितिं कलयते नित्याधिवासंबुधाः ।
यंघण्टाशतपद्यबंधचतुरं विद्यावधूवल्लभं ।

आत्रेयांबुधिवारि जातमतुलं निस्सीमशीलास्पदं
सत्सौभाग्यरसाकरं श्रुतनिधिं धीमन्दिरं मन्वते ॥१३॥
महादेवकवेस्तस्य सन्दर्भेषु बहुष्वपि ।
मह्यं विटविलासोऽयंरोचते भाणशेखरः ॥ १४ ॥

(मा समोदं।)

शृङ्गारस्यरसायनं रसविदामानन्दकन्तायितं
श्रीमत्कामकलारहस्यपिशुनं धूर्ताग्रणीनायकम् ।
तत्काव्यं भुवि को न वाञ्चति सुधीस्संदर्भचूडा-
मणेर्यस्य श्रीरधुनायकप्रियतमः कर्त्ता कवीन्द्राग्रणीः ॥
तत्कतम इदानीं प्रस्तूयते ऋतुः । सूत्रधारः किं न पश्यति भवान् ॥

तथाहि, माकन्दबृन्दविलसन्मकरन्दपूरान्
मन्दानिलावलिरियं चलयत्यमन्दम् ।
कन्दर्पबाणानिकरा इव कामिनीषु
लीलावनान्तविहरासु पतन्ति तेऽपि ॥ १६ ॥

मारिषः (श्रुत्वा) सम्यगुद्बोधितं तरुणवसन्त इति ।

यथा, पुष्पोद्भेदं प्रकटितवतीं मालतीं वीक्ष्यमाध्वीं
पायं पायं मधुपनिकरस्संभ्रमादाकुलाङ्गः ।
गायं गायं मुदितहृदयस्सङ्गतो ऽप्यङ्कदेशं
निर्यातोऽसौ सविधविचरद्गंधवाहस्य रोधात् ॥ १७ ॥

(नेपथ्ये) सत्यं भोः सत्यम् । (सूत्रधारः) (श्रुत्वा) कथमुपक्रान्तमेवास्मद्वर्ग्यैः । यदस्पत्सुहृन्मनसिजविजयोनाम गंधवाहनाम्ना विटसार्वभौमस्य भूमिकामादायत्वद्वचनं स्वपरमेव कुर्वन्तित एवाभिवर्त्तते पश्य ॥

मन्दपवनपरिकंपितमनसिजनृपतिपताकाशङ्कापादकार्धलंबमानतपनीयतन्तुनिकरपर्यंचितचतुरश्चलल्सत्कुसुमशरनिर्मित विटसार्वभौमपट्टाभिषेकमाणिक्यमकुटायमानकौसुंभवसनपरिकलितशिरोवेष्टनपरिमण्डितः सुमश-



रसमरसहकरणचतुरवीरवादसदृशझङ्काररवमुखरभृङ्गावळीनिहितकादंबरीभरितभृङ्गारुपङ्क्तिनिभमाध्वीभरोल्लसितचांपेय सूनचयमाल्याळिसंवलितधम्मिल्लाः लाञ्छनशङ्काजनकमृगमदतिलकभासुरनिटिलफलकचन्द्रार्धः । गण्डतलमुकुर परिबिंबितकर्ण युगलकलितकामतन्त्रतत्त्वोपदेशागतदेशिकशङ्कावहबकुलमुकुलकमनीयः वदनाहिमकरकलङ्कायमाननवनिश्मश्रुपरंपराभिमर्शन श्रवणशुकतुण्डगर्वनिर्वापणचणपाटलकुटिलनखमुखः वारविलासिनीविरहवेदनोदितधवळिमकबलितकळेबरइव राकासमुदयशारदामृतकरपरिभवकरमधुरदुकूलकवचसमलंकृतगात्रायष्टिः कोकनदसमुदितविद्युल्लतातुलितकनकवेत्रवल्लीघटितकरतलः । अन्तर्लसत्कामिनीविषयान् रागगमान्तरमुद्गमन्निव वीटिकारसपुञ्जरंजितरदनवसनः निखिलयौवतानुरागवलयितमूर्तिरिव कौसुंभवसनयुगराचित सव्यानान्तरीयः अखिललोकलोचनागोचरतयाऽन्तर्निहितयुवतिजनवशनयनकुशलचूर्णपुंजैरिव कवचपुटतानितकल्याणकरण्डभरितनासिकाधूळिकदंबैरसकृत्कृताघ्राणः स्मर समरसमयमवसायतीति तद्द्रुतधावननिरोधनायेव कनकशृङ्खलाबद्धकाळञ्जानोपयुक्तकनकयन्त्रघटितकवचपुटः मदनयजनकृतकौतुकबंधइव एककरबद्धतनुतरसुवर्णकंकणः अनन्यसाधारणस्मरसमरचातुरीमात्मनः प्रदर्शयन्निव पट्टबंधयामितमध्यदेशः निजकृतसूरतलीलारसराञ्जितरमणीजनजनितयशोगानरताभ्यामिव क्रेङ्काररवमंजुळाभ्यामुपानद्भ्यां परिष्कृतपादमूलः वारवामोरूरचितमाररणपरिचिन्तनसरभसावगाहनहृदयसमूत्कूलितसंतोषपूरइव मन्दहासलसितवदनकमलः दुराधिगमविलासिनीहृदयकुहरगतमानाहरणप्रहितान्कुन्तनिकरानिवातिर्यगालोकितानि कन्दळयन् प्रणयकलहकुपितवारसुन्दरीचरणनळिनयुगताडनपरिशीलितगतिविशेषइवालसगमनपरिलोलः विटकुलशेखरोऽयं मन्दं मन्दमुपसर्पति रङ्गभूमिं तदावामप्यनन्तरकरणीयमवलंबयावः ॥

(इत्युभौ निष्क्रान्तौ)

(प्रस्तावना)

(ततः प्रविशति यथोदिष्टो गन्धवाहः)

(प्रविश्य)

(आत्मगतं) कथंवासन्ती दुहित्रा मालयत्या सहास्माकं परिचयः प्रकाशमुपगतः ।

अथवा, यत्प्रेयसापि रचितं कुलपालिकाया-
मेकान्ततस्तदखिलं बहिरेति सद्यः ।
बाराङ्गनासहचरैर्विटसार्वभौमै
रानीयते प्रकटतामिति किं विचित्रम् ॥ १८ ॥

(सविस्मयं) हन्तान्यादृशी विटचोरणी पश्य ।

दृष्टोऽनयासविधगेहलसन्युवायं
कान्तैरपाङ्गवलनैः कमनीयपातैः ।
इत्यात्तहेतुकमनिर्वचनीयमेनं
रुद्धाव्यंतं कुलवधूपुरहस्य वृत्तम् ॥ १९ ॥

बतैषां भूपतिचरित विडंबनमपि पश्य ।

तत्तद्वधूचरितवेदनकर्मणीमे
जाराङ्गनास्सुचतुरां परिकल्प्यचारान् ।
ज्ञात्त्वातदीयचरितं सुमबाणयुद्धे
जाराबला सहकृतारमणीर्जयन्ति ॥ २० ॥

किंच, पद्मोद्भवस्य विभुतानि यतेरधीना
तामप्यमी विटगणास्समतिक्रमन्ते ।
तत्तक्षणोचित विचित्ररसैक पात्री-
मातन्यवाचमसकृद्रमयन्ति साध्वीः ॥ २१ ॥

नानाविधानि कुसुमानि वितन्य नाना-
बन्धोज्वलानि फलवर्गमपूर्वदृष्टम् ।
शृङ्गारनर्म सहकर्मपटूनि चित्रा-
ण्यापाद्यते कुलवधूरपिलोभयन्ति ॥ २२ ॥



भूपाइवाश्रितजनानपिधूर्त्तलोकाः
पाणिग्रहात्तरमणान्परिहृत्य याताः ।
पीनस्तनीरिति भृतिं परिकल्प्यमासे
हस्तावलंबमपबाधमवन्ति नित्यम् ॥ २३ ॥

याकाचिद्रमणी मनोहरतरा दृष्टायदीमे विटा-
स्तल्लब्ध्यै बहुयत्नगौरवभृतो गूढा निशीथेभृशम् ।
तांबालांमलमुक्तये निजगृहान्निर्गामिनीं तत्क्षणा-
दाहृत्यान्यपुराणिं मोदभरिता गूढं नयन्तेऽभयम् ॥२४॥

तस्या मार्गणतत्परा यदि जनास्तद्बान्धवास्तत्क्षणं
श्वलाचारमुखात्परं पुरममीतां प्रापयन्त्यङ्गनाम् ।
नीत्वातद्युवतेर्दिवातुमधुरं पुंवेषमाकल्प्यतां
रात्रौमाररणैक सौख्यमुदितां तन्वन्तिनित्यं विटाः ॥

संभूयनाटकमिषाद्रजनीषु के-
चिद्रङ्गस्थलीं विविधवेषभृतोऽवरुह्य ।
वेषानुगैर्वचन नृत्तविलासगीतै-
स्सर्वानयन्ति वशतां विटसार्वभौमाः ॥ २६ ॥

अत्यन्तसौहृदपरां प्रभवोय आस-
न्संबन्धिनीरपि सरोजमुखीरमीषाम् ।
अन्याश्चतत्पुरलसत्तरुणीर्भजन्ते
कामागमैर्विटवरामुदितान्तरङ्गाः ॥ २७ ॥

अपिच, वीथौविलासगमनास्सुहृदामगारे
दृष्ट्वाङ्गनामधुरगात्रलतास्सहासम् ।
अंबाद्यरात्रिनियता मधुराकथाता-
माहूय चान्यरमणीर्भवती वयस्याः ॥ २८ ॥

आगत्ययूयमपि पश्यत मंजुगीतां ।
इत्यादरेण निगदन्ति विटा दिनान्ते ॥ २९ ॥

आगच्छती रथविलास वचस्सुगीतै-
मोंहैकभाजनमतीर्युवतीर्वितन्य ।
ताभिस्सहैव सततं सदनेषु तासां-
मारोत्सवं प्रतिदिनं रचयन्ति मोदात् ॥ ३० ॥
केचिद्विटा वलयविक्रयणापदेशा-
त्पाणिग्रहेऽपि रमणस्य नितान्तभीताः ।
संगृह्य पाणिकमले परिकंपयन्ति-
त्वङ्गत्सतनंकुचमपाङ्ग गणैः पिबन्ति ॥ ३१ ॥
मन्दस्मितं मधुरभाषण तत्परास्ते
यत्कामिनीभिरसकृद्वलयप्रियाभिः ।
आलोक्यतद्वदनपंकजमर्धजात
मानोभवोत्सव सुखं मनसेऽर्पयन्ति ॥ ३२ ॥
केचित्पुराण पठनच्छलतो विटेन्द्रा-
स्तोत्र्यरभि प्रभृतिरागमनो हराणि ।
वामानुवर्णन पराणि मनोजवेद-
तत्त्वोपदेश निपुणानि वचश्शतानि ॥ ३३ ॥
हीरद्वयेनचलदंशुचयेनराज-
द्गण्डस्थलं चलितमाल्यक चौघबन्धम् ।
वक्षश्चलत्स्फटिकहारलतं प्रसर्प-
द्रत्नांशुरञ्जितकरांगुळिभूषणौघम् ॥ ३४ ॥
गायन्ति पूर्वरजनौ विधवाबलानां
मोदाय पङ्कजदृशांच परक्षपासु ।
शुश्रूषणाय सविधंमुहुरागताभिः
कामिश्चिदब्जशरपूजनमेधयन्ति ॥ ३५ ॥

(समोदहासं) अहो अस्मन्मतमनुरुन्धन्ति भागवता अपि । अत एवखल्वस्मदीयं चरितं सर्वजनरञ्जकमित्यसकृदानंदयामेह ।

(क्रमशः)

॥ श्रीः ॥

श्रीमद्वञ्चिमण्डलमहामात्यान्, श्रीकृष्णस्वामिरायप्रभुवरान् प्रति

## ॥ मङ्गलाशंसाश्लोकाः ॥

कति नाम न बिभ्रति स्म मां
मतिमन्तः सचिवा महाशयाः ।
न भवानिव तेषु कश्चना-
प्यकरोन्मे विरहार्तिमीदृशीम् ॥ १ ॥
न हि माधववद् विपद्गता-
मयि मां मृत्युमुखात् त्वमाच्छिनः ।
न च शेषवदन्तरं तव
प्रतिपन्नास्मि पदोन्नतिं नवाम् ॥ २ ॥
अथ केन पुनस्त्वयि प्रभा-
वनुरज्ये विरहासहा भृशम् ।
अहमत्र न वेद्मि किं पुनः
प्रतिवक्ष्ये बत पृच्छतो जनान् ॥ ३ ॥
नृपभक्तिरसक्तिरुच्छ्रिते-
ष्वपि भोगेष्वभिगम्यतार्जवम् ।
अचिराक्रियतानुकम्पिते-
त्यगणेयाः किल तावका गुणाः ॥ ४ ॥
न्यायाध्यक्षपदं प्रधानसचिवस्थानं च मन्मण्डले
पूर्वं तत्र पुरान्तरे च विधिवद् बिभ्रद् जनान् रञ्जयन् ।
व्यापारैर्बहुभारकार्यगुरुभिर्योऽनैष्ट मध्यं वयः
कृष्णस्वामिमहाशयः स भजताद् विश्राममसौख्यं चिरम् ॥ ५ ॥

इति वञ्चिवसुन्धरा ।

तव सुमन्त्रिणो गुणसमुन्नतिं
कविषु को भवेद्गातुमुद्यतः ।
गणनया न सा ख्यापुमिष्यते
नृपसुहृत् सदा जनसुहृत् तथा ॥
विरलमन्त्रितामलभथाः सुधीः
गिरितटे ह्रदं सेतुनाकरोः ।
स्रवति यज्जलं खातकुल्यया
मरुभुवोऽचलादासमुद्रतः ॥
वसुभुवोऽभवन् यत्प्रभावतः
खरगृहे नदी शुकनदी त्वया ।
सुखपदक्रमश्रेणियन्त्रिता
जनपदेऽखिले रामराष्ट्रगे ॥
जनहितावहाः कर्मणां तती-
र्गुरुयशोभृतोऽकारयद् भवान् ।
नेतिबाधां जना मन्त्रिन्! त्वयि साचिव्यमाश्रिते ।
अजानन् नित्यमृद्धाश्च बभूवुरिह सर्वशः ॥
श्रीकृष्णशर्मन् जेजीया मन्त्रिवर्य! समाः शतम् ।
जनोपकृत्या कालं त्वं नयन् सद्भिः सदार्चितः ॥

---

श्रीवञ्चिमण्डलमहामात्यान्, श्रीमत्कृष्णस्वामिरायप्रभुवरान् प्रति

## ॥ मङ्गलाशंसाश्लोकाः ॥

प्रथममुत्तममाड्विवाकतां
अबिभृथाः समास्त्वं त्रयोदश ।
तदनु षट् समा मूलभूपतेः
सचिववर्यतां त्वं बिभर्षि भोः ॥१॥
उत्तमे पदे को न्वियच्चिरं
द्वे समाश्रयन् वञ्चिमण्डले ।



नीतिमान् विना त्वां वरैर्गुणै-
र्भूपतिं प्रजाश्चाभ्यनन्दयन् ॥ २ ॥
अक्षता क्षमा निरवधिर्दया
नीतिशालिता जनहितैषिता ।
दैवभूपयोरपि च भक्तते-
त्येषु ते गुणेष्वभिरता वयम् ॥ ३ ॥
श्रीकृष्णस्वामिनामप्रभुवर! जय भो मूलभूपालमन्त्रिन्!
विन्दस्वायुः सुदीर्घं वपुषि मनसि च स्थेमभाजा सुखेन ।
नानारूपोपकाराधिगमसमुदितानन्दकार्तज्ञ्यवादान्
मन्त्रिस्थानान्निवृत्तोऽप्यसकृदिह समभ्येत्य सन्तोषयास्मान् ॥

---

॥ श्रीरस्तु ॥

## ॥ श्रीमद्वञ्चिमण्डलमहामात्यानामुपकारस्मृतिः ॥

SANSKRIT VERSES ON

# Dewan Bhadur K. Krishnaswamy Rao,

C. I. E., F. M. U.

*DEWAN OF TRAVANCORE.*

श्रीमान्[1] श्रीरामराजो जगति विजयतामाप्तरक्षाधुरीण-
स्सर्वानुद्धर्तुकामो विबुध[2]कुलमणीन् सत्पथं[3] सेवमानान् ।
आसीनो हेमसिंहासनमधि बहुभिर्वेष्टितो ब्रह्मनिष्ठै[4]-
रानन्दी चारु[5]गायत्कुशलवसुमनोहारिगीते नितान्तम् ॥ १ ॥

१ श्रीमान्=लक्ष्मीभूतसीतायुक्तः राजलक्ष्मीयुक्तश्च ।
२ विबुधाः=देवताः, विद्वांसश्च । ३ सत्पथः=सन्मार्गः । आकाशश्च ।
४ ब्रह्मनिष्ठैः=तपस्विभिः वैदिकैश्च ।
५ चारुगायन्तौ कुशलवौ तयोस्सुमनोहारि यद्गीतं तस्मिन् । चारुगाय-
ये कुशलाः तेषां वसुभूतं मनोहारि च यद्गीतं तस्मिन् ॥

कश्चिज्जयति महीयान् देशो वञ्चिरिति विश्रुतो भुवने ।
यस्मिन् कृतयुगधर्मः पुञ्जीभूतः कलेर्भिया चरति ॥ २ ॥
तं श्रीमूलकनामा राजा रक्षत्यमेयगुणधामा ।
विख्यातकीर्तिभूमा विनमज्जनपालनात्तचिरमहिमा ॥ ३ ॥
तस्य सचिवाग्रगण्यश्श्रीकृष्णस्वामिनामधेयोऽयम् ।
अनितरसामान्यमिदं कुर्वन् साचिव्यमद्भुतं जयति ॥ ४ ॥
मन्त्रित्वमुपगतेऽस्मिन् निजाधिषणाविजितगीष्पतौ विप्रे ।
आस्माकीने राष्ट्रे ये ये लाभा विशेषतस्सन्ति ॥ ५ ॥
तान् सर्वानपि भणितुं कल्यो नैवास्ति कोऽपि नूनमिह ।
अथापि कतिचन वक्तुं सन्धुक्षति नः कृतज्ञताऽऽस्माकी ॥ ६ ॥
यस्मिन्मन्त्रिणि कुतुकादेतं देशं समागतो धीमान् ।
गवर्नर्जनरल् मुमुदे सुतरां संवीक्ष्य राज्यभारमिमम् ॥ ७ ॥
यस्मिन्मन्त्रिणि सप्तमहेड्वर्ड्श्रीचक्रवर्तिनं द्रष्टुम् ।
भारतवर्षनिवासिषु भूपतितिलकेषु बहुषु यातेषु ॥ ८ ॥
अस्मद्देशमहीपतिरलमकरोच्चक्रवर्तिनः पार्श्वम् ।
इति कीर्तिरतुलभासा भूमौ विजरीहरीति महनीया ॥ ९ ॥
यस्मिन्मन्त्रिणि नूतनमनितरसाधारणं बिरुदम् ।
जि. सि. ऐ. इ. इति सत्प्रशंसनीयं महान्तमतिमोदात् ॥ १० ॥
सप्तमहेड्वर्ड प्रादादस्मद्भूपालसार्वभौमाय ।
श्रीरामवर्मनाम्ने जनताभाग्यावलीनाम्ने ॥ ११ ॥
यस्मै प्रादायि दिवान्बहदूर् बिरुदाङ्किताय सचिवाय ।
सि. ऐ. इ. इति च महान् बिरुदश्श्रीचक्रवर्तिना महितः ॥१२॥
यस्मिन्मन्त्रिणि हर्षादस्मद्भूपालपालितं देशम् ।
अवलोकितुमायातो मार्टमहीशोऽपि मङ्गलाशंसी ॥ १३ ॥
राज्ञः पालननैपुणमदृष्टपूर्वं प्रजासु वात्सल्यम् ।
उचितसचिवादिलाभं ज्ञात्वाऽशेषं ननन्द हृदयाब्जे ॥ १४ ॥



यस्मिन्मन्त्रिणि सूक्ष्मैः राजतचक्रैः प्रजाभिरनुभूता ।
परवञ्चनादिदोषाद्बाधा कान्तारदेशमापदिह ॥ १५ ॥
यस्मिन्मन्त्रिणि पश्चिमताम्रानद्यां समुन्नतं सेतुम् ।
बध्वा महीपतिरयं प्रजासु शर्मप्रकर्षमातनुते ॥ १६ ॥
यस्मिन्मन्त्रिणि विद्या प्रचारमाप्नोति बहुषु विषयेषु ।
टेक्निकलिति नामभृतां कलालयानां बहूपकृतिकरणात् ॥ १७ ॥
यस्मिन्मन्त्रिणि राज्ये धूमविमानेन यात्रिणो यान्ति ।
गमनागमनार्थमहो कुल्या काचिच्च दीर्घिता लसति ॥ १८ ॥
यस्मिन्मन्त्रिणि संस्कृतभाषावैदुष्यभाजि धीमहिते ।
जीर्णग्रन्थास्सर्वे लिखितचरास्तालपत्रनिवहेषु ॥ १९ ॥
शिथिलाः पुनरुज्जीवं प्रतीक्षमाणा बहोः कालात् ।
जीर्णोद्धारमवाप्य प्रचारमिह यान्ति मुद्रिता राज्ये ॥ २० ॥
यस्मिन्मन्त्रिणि मूलकमहीश्वरेण प्रतिष्ठिता महती ।
भूपण्डनारायणनैराचार्यैः पण्डिताग्रणीभिरियम् ॥ २१ ॥
परिवर्धितभूतिभिरहो पाठितशिष्या बहूत्साहम् ।
संस्कृतविद्याशाला दक्षिणदेशस्य हीरवद्भाति ॥ २२ ॥
यस्मिन्मन्त्रिणि रिक्तो जिज्ञापयिषुस्स्वकीयवृत्तान्तम् ।
पत्रीप्रेषणसाधनमुद्रणपत्रेषु सौकर्यं लभते ॥ २३ ॥
हृदयमृगेन्द्रासनमधितिष्ठति राज्ञीव यस्य गुरुभक्तिः ।
आस्तिक्यबुद्धिरपि तामनन्यसुलभा सखीव पालयति ॥ २४ ॥
तादृशमतिमनुयातो योऽयं साध्नोति फलमनिर्वाच्यम् ।
सर्वानप्यारम्भान् कुर्वन्महतो विनायासम् ॥ २५ ॥
हितकृद्भ्योऽपि प्रजानां यदीययुक्तिर्महीपतेश्चित्तम् ।
वत्सं गौरिव लहरी निम्नमिवात्रानुधावते सततम् ॥ २६ ॥
क्षितिरतिमानसमिह यं पङ्कजमभिवीक्ष्य भानुमिव भूमौ ।
विकसितमतीव रुचिरं जनयति जगतामपारमानन्दम् ॥ २७ ॥

वैदिकलौकिकगोष्ठीचतुरं यं प्राप्य मोदमिह मनसि ।
कलयन् स्तवीति चतुरिमपरिपाकं तत्र तत्र कलवाण्या ॥ २८ ॥
तत्तादृशसचिववरश्श्रान्तां धिषणाममेयराज्यभरात् ।
किंचिदिव विश्रमयितुं नैजं देशं प्रयास्यति प्रभुः ॥ २९ ॥
इति विषयं शृण्वन्तस्सर्वेऽपि जनास्तदीयमुपकारम् ।
स्मारंस्मारं हृदये याचन्त्येवं तदग्रतो मोदात् ॥ ३० ॥
पुनरपि दर्शनदानान्मुहुर्मुहुर्नः प्रमोदमापयतु ।
अचिरादनुगृहीतापपारकरुणो नृपालसचिवोऽयम् ॥ ३१ ॥
सोऽयं सचिवो भुवने जयतादाचन्द्रतारमकलङ्कः ।
सर्वजनशंसनीयां कीर्तिं यातस्स्ववान्धवैस्साकम् ॥ ३२ ॥
इत्येवं भगवन्तं भक्तजनाभीष्टदानशौण्डीरम् ।
संप्रार्थयामहे वयमनिशं श्रीपद्मनाभमखिलेड्यम् ॥ ३३ ॥
इत्थं विज्ञापयते साम्बशिवाख्यः द्विजन्मायम् ।
सर्वजनानामाशयमानन्दाद्विनयपूर्वमिह सदसि ॥ ३४ ॥

---

॥ श्रीविद्यायैनमः ॥

# ॥ वेदसारविवेकः ॥

इह खलु निखिलजगदुत्पत्तिस्थितिलयहेतुभूतः परमकारुणिको भगवान्महेश्वरस्सृष्ट्यादौ ब्रह्माणं सृष्ट्वा धर्मादिनिखिलपुरुषार्थसिद्धिप्रदान् वेदान्ब्रह्मण उपादिशत् । ततः श्रीमन्नारायणः बादरायणरूपेणावतीर्य एकाकारेण स्थितान् वेदान्महत्तरत्वादेकेनैव निरवशेषतो दुराधिगमान्मत्वा तदवगतिसौकर्याय ऋग्यजुस्सामाथर्वणाख्यभेदेन चतुर्धा विभज्य ततोऽपि मन्दमतीनां सुदुर्विदं मत्वा प्रत्येकं वेदं शाखाभेदेनापि भेदितवान् । तदित्थं ऋग्वेद एकविंशतिशाखासमलंकृतः यजुर्वेदश्चैकाधिकशतशाखासमुज्ज्वलः सामवेदस्सहस्रशाखापरिमण्डितः अथर्वणवेदश्च नवशाखासमुच्चयः तदुक्तं सूतसंहितायाम् ॥



आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम ।
स पुनर्देवदेवस्य प्रसादादम्बिकापतेः ॥
संक्षिप्य सकलान्वेदांश्चतुर्धा कृतवान्मुनिः ।
तथापि मुनिशार्दूलाश्शाखाभेदेन भेदितः ॥
एकविंशतिभेदेन ऋग्वेदो भेदितोऽमुना ।
यजुर्वेदो द्विजा एकशतभेदेन भेदितः ॥
नवधा भेदितोऽथर्वः वेदस्सामस्सहस्रधा ॥

अपि च तादृशो वेदः कर्मज्ञानकाण्डाख्यभेदेन द्विधा भवेत् । कर्मकाण्डे कर्मस्वरूपं कर्माधीनफलागमः सुखदुःखादीनां कर्मफलत्वं कर्माकरणे प्रत्यवयनिवृत्त्यर्थप्रायश्चित्ताचरणप्रकारः इत्यादयोबहवो विषयाः प्रकाश्यन्ते । ज्ञानकाण्डे तु आत्मा वारे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन । ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनन्तं ब्रह्म इत्यादिश्रुतिशतप्रतिपादितः श्रवणादिविधिः ब्रह्मविविदिषोपायः ब्रह्मस्वरूपलक्षणं ब्रह्मज्ञानफलरूपकैवल्यावाप्तिः इत्यादयो बहवो विषयाः प्रकाश्यन्ते । तत्र कर्मकाण्डविहितविषयाणां संशयविपर्ययराहित्येन सौलभ्येन चावबोधनार्थं मनुबोधायनादयस्स्मृतिसूत्राण्यरचयन् जैमिनिमहामुनिरपि पूर्वमीमांसासूत्राणि रचयामास । तत्र ज्ञानकाण्डविषयप्रकाशाय हि बादरायणो भगवानुत्तरमीमांसाख्यब्रह्मसूत्राणीतिहासपुराणानि चारचयत् । नन्वितिहासपुराणादिष्वपि कर्मकाण्डश्रुतविषयाणां सत्वात्कथं तेषां ज्ञानकाण्डार्थप्रकाशकत्वमिति चेन्न । तत्कमनीयतामवतारयति । इतिहासपुराणेषु हि ज्ञानकाण्डविषयस्यैव प्राचुर्यात्तात्पर्यमुखेनापि तस्यैव प्रतिपादकत्वात्तथोक्तम् । तथाहि, प्रायेण पूर्वभागार्थः धर्मशास्त्रेण कथ्यते । इतिहासपुराणाभ्यां वेदान्तार्थः प्रकाश्यते ॥ एवं च वेदानुसारितयैव सर्वेषामितिहासपुराणागमादीनां प्रामाण्यम् । आगमास्त्वधिकारिभेदेन प्रवृत्तास्तेषामपि वेदानुसारितयैव प्रामाण्यम् । त-

दुक्तं सूतसंहितायां सर्वं वेदाविरोधेन प्रमाणं मुनिपुङ्गवाः ॥ इति तत्रैवं निखिलपुरुषार्थसिद्धिप्रदेषु वेदेषु सत्स्वनादिषु तेषां सादित्वं सन्दिहानानां केषांचिदाधुनिकानां शङ्कां किञ्चिदिव निरूप्य तां निवारयाम । एवं किल शङ्का वेदास्तु बहुऋषिकृता नानादित्वमर्हन्ति । तथाहि । ऋग्वेदे अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजमिति मन्त्रस्य मधुच्छन्दा नाम ऋषिः । तद्वदिदं मे वरुणश्रुधीहवमिति यजुर्मन्त्रस्य शुनश्शेप ऋषिरिति वैदिकमार्गेण प्रसिद्धेरनयोर्मन्त्रयोर्मधुछन्दश्शुनश्शेपावेव कर्तारावितिं सुवचं एवमेव वेदेषु श्रूयमाणमन्त्राणां तत्तन्मन्त्रानुष्ठाने प्रोच्यमानाः वैदिकमार्गेण प्रसिद्धा ऋषय एव कर्तार इत्यूह्यम् । एवं वेदानां मधुच्छन्दश्शुनश्शेपादिबहुऋषिकृतत्वे स्फुटं प्रतीयमाने कथं तेषामनादित्वमिति ॥

अत्र किञ्चिद्वदामः वेदमन्त्राणां ऋषिच्छन्दोदेवताकथनपूर्वकत्वेनानुष्ठीयमानत्वं हि सुप्रसिद्धं । अग्निमीडे पुरोहितमिति मन्त्रस्य मधुच्छन्दा ऋषिः गायत्री छन्दः अग्निर्देवता होमे विनियोगः । अनया ऋचा मधुच्छन्दा नाम ऋषिरग्निमुपास्य तस्मात्सुबहून्वरानासाद्य प्रतिष्ठामलभततरामत्येव तत्वं न तामृचं मधुच्छन्दा एव कृतवान् । तद्वदिमं मे वरुणेति मन्त्रस्य शुनश्शेप ऋषिः गायत्री छन्दः वरुणो देवता सायमुपस्थाने विनियोगः । पूर्वं किल शुनश्शेपो नाम ऋषिः हरिश्चन्द्रकृतयागस्य पशुत्वेन यूपे बद्धस्सन् बन्धविमोचनार्थं विश्वामित्रमहामुन्युपदिष्टेनानेन मन्त्रेण वरुणमुपास्य प्रसन्नाद्वरुणादायुर्दीर्घ्याद्यनेकवरान् लब्ध्वा सुखमजीवदिति श्रीमद्भागवतादिपुराणेषु स्फुटं प्रकाश्यते । एवमेव तत्र तत्र प्रोच्यमाना ऋषयस्तत्तन्मन्त्रैरभ्युदयं प्रापन्त इत्येतं ज्ञात्वैव तत्तन्मन्त्रानुष्ठाने महती प्रवृत्तिश्रद्धा वर्धतेति खलु ऋषिनामकथनसंप्रदायः । अतः खलु ऋषयो मन्त्रद्रष्टार इति प्रकाश्यन्ते । एवं मन्त्रैरभ्युदयं लब्धवन्तो महर्षय इति स्थिते कथं तेषामनादित्वभङ्गः तस्माद्वेदा अनादय एव ॥

(क्रमशः)

## ॥ उत्तररामायणार्या ॥

( पूर्वप्रकाशितात्परम् )

इति कथयित्वागस्त्यः तत्वज्ञस्स्वाश्रमे रघूत्तंसम् ।
दर्शनमुदितोस्ताबीत् कोविन्नुयात् कैतकन्नु न गुणज्ञः ॥ १५७ ॥
आगस्त्यादाश्रमतोऽयोध्यां पुष्पकवरेण संप्राप्य ।
प्राहिणोति स्म सपुष्पकमाहितकार्यस्य साधनेन किमु ॥ १५७॥
नृपव्रतवधसाध्यमस्वं मुक्त्वानुजयोर्गिराश्वमेधमखम् ।
बहुमेने रघुवीरः युक्तं ग्राह्यं हि बालवचनमपि ॥१५८॥
कनकमयीं जनकसुतामाचार्यानुज्ञयोररीकृत्य ।
रामोऽश्वमेधमकरोत् हयमेधोनैकभार्यकार्यो हि ॥ १५९॥
यागसदसि शिष्याभ्यां आगत्याराधितश्च रामेण ।
वाल्मीकिरास्तमध्येऽमूल्यो मणिरेव निष्कमध्येस्यात् ॥१६०॥
गुर्वाज्ञया कुशलवौ चरितं रामस्य मुनिकुले जगतुः ।
मुनिशिष्यतयात्तरदौ अनिलेरित एव वर्षति घनौघः ॥ १६१ ॥
रामोप्यनुजैस्साकं सामोदं स्वसविधे निजोदन्तम् ।
विशिष्यगीतमश्रृणोत् तृषितस्यैव हि सुधास्वदेतालम् ॥१६२॥
सम्मानोपेक्षितया रामो गुणलक्षणैश्च तौ मनसि ।
स्वौ निश्चिकाय तनुजौ स्वाननमादर्शगं नकोवेत्ति ॥१६३॥
गहनात्सीता नयेन सह सानुमतिं ददौ तदा रामः ।
सुचिरोत्कण्ठितचेताः उचिता भर्तुस्सतीषु सादरता ॥ १६४ ॥
आनाय्यतां स्वशिष्यैः तनकसुतां स्वाश्रमात्सवाल्मीकिः ।
अनयच्च राम सविधं निक्षेपः स्वाम्यपेक्षितो देयः ॥ १६५ ॥

दर्शयतु सदसि शुद्धिं पुनरपि सीतेति रघुकुलाधीशः ।
आज्ञापयत्सतीं तां अपवादविशुद्धिमीहतेमानी ॥ १६६ ॥
रामे च सदसि पश्यति भूर्दीर्णा भद्रपीठमारोप्य ।
सीतामनत्स्वान्तः पुत्र्यतिदुःखं हि न सहते माता ॥१६७॥
अथ हयमेधावभृतं विधिमनतिक्रम्य रामभद्रो सौ ।
विदधे नैमिशविपिने वितनोति मखक्षतिं हि नाशौचम् ॥१६८॥
सीतावियोगदुःखं प्राप्तं सस्मार नैव रघुवीरः ।
जैत्रसुतसन्निधानात् पुत्रमुखेक्षाहि हन्ति दुःखशतम् ॥ १६९ ॥
शमधिकमनुजेभ्यः धर्मात्मा संप्रदायतत्साक्षात् ।
प्रशशासमहीं रामः सुसहायो भूपतिर्हि विजयीस्यात् ॥ १७० ॥
कौसल्या च सुमित्रा कैकेय्यपि दिवमुपेत्य पतिसहिताः ।
रामेणातर्प्यन्तचक्षेमः पुत्रस्य मातृभाग्यं हि ॥ १७१ ॥
गान्धारजयोद्यमिनं गार्ग्याचार्येण कारयामास ।
रामं जातु युधाजित् कामयते लोक आत्मजनकुशलम् ॥१७२॥
तरसाभिषिच्य रामो भरतस्य सुतौ युधाजिदुपदिष्टः ।
प्रास्थापयत् स भरतौ नस्थैर्यं बालशौर्यं ईक्ष्येत् ॥१७३॥
बलिनस्ते गन्धर्वान् शैलूषसुतान् त्रिकोटि संख्याकान् ।
हत्वापुर्गान्धारान् सत्ववतां जिष्णुता दिशेदेशान् ॥ १७४ ॥
तक्षं तक्षशिलायांपुष्कलमास्थाप्य पुष्कलावत्याम् ।
भरतो भेजे रामं ह्यग्रजकैंकर्यमेवतद्राज्यं ॥ १७५ ॥
कारुपथनामदेशे भरतेन ज्ञापितेन्वशाद्रामः ।
लक्ष्मणसुतौ निवस्तुं रक्ष्यं हि कुटुंबमर्थमुत्पाद्य ॥ १७६ ॥
अंगदमथां गदीयं सौमित्रिश्चन्द्रकेतुमप्यनयत् ।
श्रीचन्द्रकान्तनगरं वाञ्छति हि पिता सदा सुतश्रेयः ॥ १७७ ॥



अथ मुनिवेषः कालो कथयद्रामं मिथोविधिप्रहितः ।
वैकुंठागमनकृते ह्याकारणमुचितमखिलनाथस्य ॥ १७८ ॥
दौवारिकतां नीतं दुर्वासा लक्ष्मणं तयोर्वदतोः ।
रामं क्षणं ययाचे ब्राह्मणतानाम् सततमनियागा ॥ १७९ ॥
लपित सौमित्रिमुखात् कुपितस्य स राघवोत्रिपुत्रस्य ।
श्रुत्वा कालं व्यसृजत् जात्वपिनरहस्य मन्यवेद्यं स्यात् ॥ १८० ॥
हर्षान्मुनये रामो वर्षसहस्रोपवासिनेऽन्नमदात् ।
तृप्तो भवच्चसमुनिः विप्राणां भोजनं हि मोदाय ॥ १८१ ॥
अनवसरतत्प्रवेशात् अनुजमसौ निश्चितात्ममात्रवधम् ।
निरवासयद्गुरुगिरा नाग्रज कलितो निदेश उल्लंघ्यः ॥ १८२ ॥
सरयूजलान्मरुत्वान् स्वरगमयत् लक्ष्मणं तु सशरीरम् ।
यानेन जितेन्द्रजितं स्वानन्ददमर्चयत्यलं लोकः ॥ १८३ ॥
वैकुण्ठमारुरुक्षुः सोत्कण्ठान् प्राणिनः स्वमनुगन्तुम् ।
समनीनहत् स रामः सुमनास्समयेन मुञ्चति स्वीयान् ॥१८४॥
राम महाप्रस्थानं प्रेम्णातत्प्रहित दूतवचनेन ।
शुश्राव स शत्रुघ्नः सौभ्रात्रं प्रीतिमेव वर्धयति ॥ १८५ ॥
मधुरांसुतं सुबाहुं वै दिशमपि शत्रुघातिनं नीत्वा ।
राममगाच्छत्रुघ्नः किंमान्य ज्येष्ठशासनादन्यत् ॥ १८६ ॥
दक्षिणकोसलनाथं दक्षिणमकरोत् कुशं लवं तु पिता ।
उत्तरकोसलनाथं पुत्रप्राप्यं हि भवति पितृराज्यम् ॥ १८७ ॥
दत्त्वांगदायराज्यं सत्वरमागात्सराममनुगन्तुम् ।
सुग्रीवो दृढभक्तिः जागर्ति सुधीर्महाफलावाप्तौ ॥ १८८ ॥
किंकरवर्यं रामः लङ्काराज्ये न्ययोजयत्सुचिरम् ।
श्रीशार्चकं विभीषणमाशामात्मार्पितां विभिन्द्यात्कः ॥ १८९ ॥

चिरजीवी हनुमंस्त्वं चरितं ममयावदस्ति भुवि तावत् ।
निवसेत्यवदद्रामः न विभाति रसो हि रसिकजनविरहे ॥१९०॥

गदतिस्म जाम्बवन्तं मैन्दद्विविदौ च मत्कथासुधया ।
जीवत चिरमिति रामः भिक्षालाभे किमस्ति गानेन ॥ १९१॥

हनुमज्जाम्बवदङ्गद मैन्दद्विविदान् विभीषणं रामः ।
चिरजीवि तयात्याक्षीत् करुणा यदि भगवतः कवा न सुखम् ॥

स्वानुगतयेऽनुमेने वानरसेनाश्च राक्षसानृक्षान् ।
सर्वान् जनांश्च रामः सर्वानुग्राहको हि समदर्शी ॥ १९३ ॥

रविजधृतवाजपेयप्रवरच्छत्रः पुरस्कृताग्निमुनिः ।
रमोगादनुजाभ्यां धर्मोयं सर्वयायजूकानाम् ॥ १९४॥

अनुयायिभिस्सरय्वां मनुकुलनाथश्चराचरैरस्नात ।
सर्वे देवा आसन् दुर्वारो रामसङ्गिजलमहिमा ॥ १९५॥

ते वानरस्तु सर्वेर्देवांस्तेजोमयास्स्वजानिहेतून् ।
रामानुमता अविशन् धाम स्वं पूर्ववासना गमयेत् ॥ १९६॥

सान्तानि कारव्यलोके सन्ततमवसन् सुखेन विधिविहिते ।
रामाज्ञयैव सर्वे ऽप्याखोर्धिवरं पृथक्च यास्येयम् ॥ १९७॥

रामस्सशंखचक्रः धामस्वगाच्चतुर्भुज श्रीमान् ।
ब्रह्मनुतो जितशत्रुः सिंहः करिणं विदार्य विशति गुहाम् ॥१९८॥

प्रतियुगमवनायसतां कतिपयशठाशिक्षणायचश्रीशः ।
अवतरति रघोर्वंशे निवसति नैकत्र रक्षको नृणाम् ॥ १९९॥

---

## ॥ चामुण्डास्तुतिमाला ॥

( पूर्वप्रकाशितात्परम् )

चामुण्डाम्बा जयति जगतीक्षोभसंहारधीरा
देवीं लक्ष्मीं नलिननिलयां वीरबालालयां च ।
वीक्ष्येवैतामतिशिशयिपुर्हेलया लीलया च
भृङ्गं कृत्वा महिषमहितं तस्थुषी शृङ्गसूच्याम् ॥ १८ ॥

चामुण्डाम्बा जयति जगदातङ्कशङ्कापनेत्री
वाणीं वीणां करविचलितां वादयन्तीं विलोक्य ।
तन्त्र्या क्रान्तामतिशयकृते पद्धतां शृङ्गतन्त्री-
जीवद्ग्राहद्विषदवयवां वल्लकीं नादयन्ती ॥ १९ ॥

चामुण्डाम्बा जयति जगती कल्यसाकल्य कुल्या
पादाक्रान्तां क्षितिमवहतां शृङ्गकोट्या लुलायैः ।
वीक्ष्या क्षान्त्या प्रतिकृतिकृते दत्तशृङ्गाग्रभङ्गे
पादोत्पिष्टे शिरसि महिषस्याधितस्थुष्यजस्रम् ॥ २० ॥

चामुण्डाम्बा जयति जगती शोकशूकच्छुरीसा
वाराहीं यातुवनकठिनान्त्रालिमुस्तामुदस्ताम् ।
दंष्ट्रभयामाजिभुवि मधुरां भुञ्जतीं वीक्ष्य शूलो-
त्खातान्त्रं कासरमशितुमाश्वाहयन्त्यन्तकं या ॥ २१ ॥

चामुण्डाम्बा जयति जगतीहर्षपीयूषवर्षा
रक्षोवक्षोविदलनकलावाधिपारीणशक्तिम् ।
कौमार्यां तां दिवि भुवि तथारक्तकां वहन्त्यां
पश्यां हत्वा महिषमवगच्छन्तीलं कारपस्त्रम् ॥ २२ ॥

१ आरोग्यं ।

चामुण्डाम्बा जयति जगतीतापतामालमूला
धावित्वाजौ नखशिखिसखे स्वे मुखे नारसिंहीम् ।
क्षिप्त्वा क्षिप्त्वा निशिचरचमूमश्नतीं तां विलोक्य
क्रव्यात्सिंहे चरणनिहवे ऽध्यूषुषी सिंहपीठम् ॥ २३ ॥

जयति जगति श्रीचामुण्डाम्बिका पिकजिद्वचाः
मथितमहिषा संख्ये सख्योर्जयाविजयाख्ययोः ।
रहसि हसिता देवैः सर्वैः कृतं प्रपलायितं
लघु विवदिषुः प्रीता ह्रीता शिवेऽवहितेऽग्रतः ॥ २४ ॥

जयति जगति श्रीचामुण्डा सधाबुधमोददा
हरिनृहरिसेनानीकोलप्रजापतिदैवतम् ।
अशनवशनस्नानापानप्रसाधनयौवतं
वदति महिषे पत्न्यां पिंषत्युलूखलमौशलम् ॥ २५ ॥

चामुण्डाम्बा जयति जगतीतोषपोषोच्चघोषा
विद्राणां द्राग्द्रविणदवधूं धूसराङ्गीं विलोक्य ।
माल्यैर्भीता सखिसुमुखिमावैः स्वं[1]मस्वं[2]त्वमित्ये-
वोक्त्वारार्तिं पदतलहतं निर्दिशन्ती प्रतीत्यै[3] ॥ २६ ॥

चामुण्डाम्बा जयति जगदानन्दसंधानुसंधा
लूतातन्तुं स्वरुमुरुजवं मुक्तमुक्त्वामिमांक्षुम् ।
नासीरेभासुरइव शुनासीर आराल्लुलायं
पत्न्यां हत्वा पतिमुपददत्याशुपुत्र्यै पुलोम्नः ॥ २७ ॥

चामुण्डाम्बा जयति जगती तापराकाक्षपैका
अन्नाभावादबलमनलं फूत्कृतित्रस्तमस्तम् ।
यान्तंभास्वन्तमिवदयितं वीक्ष्य दीनां रणाग्नौ
स्वाहां स्वाहाकृतमहिषचरुं प्राशयन्ती प्रशस्तम् ॥ २८ ॥

१ आत्मानं । २ अनाथं । ३ प्रातज्ञा ।



चामुण्डाम्बा जयति जगतीदाहदावाम्बुदालिः
निर्वाणेऽग्नौ द्विमुखविमुखे पात्रपाणौ निवृत्ते ।
दित्सुः संजीवनमिवनवं तस्य पादप्रहार-
प्रेतीभूतंरिपुमथ निवापं स्वधां तं स्वधायै ॥ २९ ॥

चामुण्डाम्बा जयति जगतीकल्यकल्याणमाल्या
कान्ते तान्ते प्रतिभटजिते लज्जिते भीतयाते ।
विन्यस्यन्ती पदतलपरामर्शमात्रात्परासोः
शत्रोः पृष्ठे शमननरमणीं विस्मितां सस्मिता ताम् ॥ ३० ॥

चामुण्डाम्बा जयति जगतीकामनाकामधेनुः
भूतोद्भूतां प्रकृतिमवलम्ब्याजिरङ्गादपेते ।
वातेऽदृश्ये रथिनमनुरूपं रथस्थोचितांसं
पांसुंकृत्वारिपुमुपचरन्त्युत्थितां वायवेयीम्[1] ॥ ३१ ॥

चामुण्डाम्बा जयति जगदाशास्यसस्यापगाम्बुः
यादोधीशं युधिपरवशं यातुधानेश्वरेऽस्मिन् ।
यादोलेशं वदति वरुणानीं[2] समाश्वासयन्ती
यावन्यासं निजपदतले कुर्वती कासरास्रम्[3] ॥ ३२ ॥

चामुण्डाम्बा जयति जगतीतापतापिच्छगुच्छा
अब्रह्मण्यं रटति पटति ब्रह्मणि ब्रह्मभीते ।
हुंफट्स्वाहेत्यपहितुमारीत्सुर्मीत्सुर्लुलायं
पत्न्यां हन्तुं गिरमपि परीरीत्सुरुक्ताभयोक्तिः ॥ ३३ ॥

चामुण्डाम्बा जयति जगतीतापलोपप्रपावाः
मुक्तां शक्तिं रणभुविहसन् सक्तुमाज्योपसिक्तम् ।

१ वायुभार्याम् । २ वरुणभार्याम् । महिषरुधिरम् ।

उक्त्वा मुक्ला वरटामिवसेनान्यमास्फालयन्तं
कौमार्यै पद्धतमरिमुपस्कुर्वती क्रीडनीयम् ॥ ३४ ॥
चामुण्डाम्बा जयति जगती क्षेमकार्मष्ठिनिष्ठा
चक्रं कृत्वाङ्कमनुपदं पाञ्चजन्यं वतंसम् ।
दाशाहीत्कौस्तुभमणिमुपाग्राहमादातुमिच्छुं
पादन्या सव्यमुमरिमुपग्राहयन्ती रमायै ॥ ३५ ॥
चामुण्डाम्बा जयति जगतीक्षोभवर्ध्यौर्विवह्निः
भूदारंशाद्दलमपमलंकेवलं प्राच्य जग्धुम् ।
व्यादास्यान्नास्यमभिपतन्तं वराहं जिघांसुं
वाराह्यै पद्धतमुपहरन्ती रिपुंकन्दमूलम् ॥ ३६ ॥
चामुण्डाम्बा जयति जगतीमोहनिद्राप्रबोधा
भीतिस्तब्धं नरहारिमरिं निर्जितं दूरदृष्टम् ।
धावं धावं रणभुवि शिलासिंहमुक्त्वोत्क्षिपन्तं
पादक्षेपक्षपितमुपदीक्षुर्वती नारसिंह्यै ॥ ३७ ॥
चामुण्डाम्बा जयति जगतीप्रार्थनाकल्पवल्ली
युद्धायोपस्थितमतिभयात्प्रस्थितं दूरदेशम् ।
शीतांशुं शीतलमिवजलंकेवलं गाहमानं
रोहिण्यै द्रप्समिवदहती पादपिष्टं लुलायम् ॥ ३८ ॥
चामुण्डाम्बा जयति जगदुत्साहसिंधूज्वलेन्दुः
संग्रामोर्वीतलमभिपतन्तं तपन्तं महान्तम् ।
आक्रम्यार्कं ।जतमथदिवादीपमुक्त्वाहसन्तं
छायायैपद्धतमभितमथं ददत्याश्वरातिम् ॥ ३९ ॥
जयति जगति श्रीचामुण्डानतातपचन्द्रिका
अबलमबलाजालं मातृप्रधानबलं ब्रुवन् ।

१ वनमक्षिकम् ।



निखिलमपिनिर्जीवं दैवं बलंसुमुदाहरन्
पदतलहते पीठीभूते परे करुणापरा ॥ ४० ॥
चामुण्डाम्बा भवानी जयति जगति संतापदारादिनश्रीः
शूलं शीर्ष्णेममायं परशुरसंकलश्चापएवास्त्यलोपः ।
नाकः सर्वः किमेषकखलुहरिशरो नास्मि लक्ष्यं नभस्स्थं
इत्युत्सिक्तं शिवेपि प्रहरति महिषं मथ्नती पादमर्दैः ॥४१॥
चामुण्डाम्बा भवानी जयति जगतीसद्धर्मभैर्माकरोर्वी
चक्रं मेऽनन्तमस्तु प्रहरननुसुदर्शी गदामोदकीकौ ।
कौमोदकयद्यपर्यासित चरणाशिरानन्दकः खड्गएषः
इत्यालापावलेपं मुरभिदि पदसंताडितंघ्नन्त्यरातिम ॥४२॥
चामुण्डाम्बा भवानी जयति जगति मोहप्ररोहोष्ट्रदंष्ट्रा
ब्रह्मन्नब्राह्मणत्वं हुमिति फडितिर्किंयक्षमुच्चाटयेथाः
शापान्नोभीर्हिकामण्डलवमुदलंवसिश्चमुश्चाक्षमालां
गर्वादित्थं ब्रुवाणं विधिमहितमभिज्ञापयन्त्यङ्घ्रिपातम् ॥
चामुण्डाम्बा भवानी जयति जगति भक्ताभिलाषामरद्रुः
मामाभूर्दन्तहीनः किमिवतवकरास्फालितेनाद्यकार्यम् ।
मुक्तोमेसर्पपाशो भवतुभवतुमौञ्जीमयीमेखलासौ
युध्यन्तं विघ्नराजं समदमिति वदन्तं पदाघ्नन्त्यरातिम् ॥
चामुण्डाम्बा भवानी जयति जगति भूभारनिस्तारशूरा
शक्तिर्मुक्ताहिरण्मय्यहहकइवसक्रौञ्चकस्तारकः कः ।
सेनान्यं नाथमर्हत्यमरबलमियन्मातरः पुत्रवत्यः
दर्पादेवं वदन्तं गुहमपि पदमर्देन निघ्नन्त्यरातिम् ॥ ४५ ॥
चामुण्डाम्बा भवानी जयति जगति भूद्रोहिसंमोहभूतिः
वज्रार्धं वेझिनाहंश्वशुर इव तव श्रीपुलोमासुलोमा ।

१ शत्रौ । २ अपूर्णः खण्डितः । ३ कनक ।

नास्यं प्रीत्यैममस्यादिदमधिचतुर्दन्तमैरावतोया
तूत्कास्मिन्नभ्रमुः सेत्यभिदधतमिन्द्रं पदाघ्नत्यरातिम् ४६॥
चामुण्डाम्बा भवानी जयति जगति भूतापदीपाग्रवात्या
खद्योतद्योतसे किंनवमवतमसं नात्र नाग्रे तुषारम् ।
नोवार्नोकर्दमः साधयवलनतमी नापि नीलारविन्दम्
इत्थं भानौयुयुत्सौ कृतपरिहसितं घ्नन्त्यरिं पादपातैः ४७॥
चामुण्डाम्बा भवानी जयति सर्गावनोत्सर्गलोला
गोपालोभ्येपिगोष्टं लगुडमपिविभर्ष्येष यास्यामिशीघ्रम्
पाशं नाद्यचद्य कण्ठे कुरु सपदि समारोहपृष्ठं विनीतः
इत्या ह्याजिघांसुं यममपि पदमर्दैः परंप्रेतयन्ती ॥ ४८ ॥
चामुण्डाम्बा भवानी जयति जगति भोगापवर्गप्रदात्री
नागंकिंवेत्स्यगोस्मि प्रसभमुपनयाद्यामृतं नोमृतोहम् ।
दद्यान्नैवापमापं सहतिलमरुणोमां भवान्नोपतिष्ठेत्
कृष्णंचेत्प्रोचिवांसं गरुडमिति पदाकुर्वती प्रेयिवांसम् ४९॥
चामुण्डाम्बा भवानी जयति जगति जाड्यज्वरेज्याभिषज्या
विक्रमस्वप्रकामं प्रहरधुरिननूपैहिपश्यामिनान्धः ।
मोपासीथा मृदङ्गैः पितुरसिहिशिलभोक्तुरात्मात्रतिष्ठे
त्याचक्षाणं सगर्वं प्रमथपतिमितिघ्नत्यरिं पार्ष्णिघातैः ५०॥
जयति जगति चामुण्डाम्बिका चण्डदण्डा
प्रमथगुहगणेशान् पङ्गुमूकाननेकान् ।
विधिमधुरिपुरुद्रान् क्षुद्रवीरान् विडम्बान्
हसतिघसतिदेवांस्तं पदाघ्नत्यरातिम् ॥ ५१ ॥
चामुण्डाम्बा भवानी जयति जगति सन्मङ्गलारम्भरम्भा
संग्रामे नो रमे ऽहं किमिव तव भवेत्कार्यमस्मिन्नसीमे ।

१ पुत्रः ।



ग्रामे राज्याइवाशुव्रजरमणि गृहीतासिपाणौमयात्वं
इत्यार्धालापमेवप्रपदहतमरिं मारयन्ती सकोपा ॥ ५२ ॥
चामुण्डाम्बा भवानी जयति जगति गोब्राह्मणक्षेमकामा
पुष्पांकिंते पृषत्कं क्षिपधनुरवनौ किंनु गन्धो विमुञ्च ।
शूलं ताम्बूलमेतत्किमुजहि वलयं किंभवेदस्यचक्रं
सर्वंदद्यां भजेमीमितिगिरमगिरं पार्ष्णिनारिंचिकीर्षुः ५३॥
चामुण्डाम्बा कृपाब्धिर्जयति जगति गोब्राह्मणाभीष्टखड्गः
नार्या सार्धं नियुद्धं ममहि शिरसि शूलं कृतं किं परेण ।
मुक्तं दैवं ममोपर्यखिलमपहतं चक्रमन्यद्विदध्यात्
किं मेब्रूहीत्यपूर्णाक्षरमरिमनसुं पादपातैर्विधित्सुः ॥ ५४ ॥
सदाचामुण्डाम्बा जयति जगतीरक्षणपरा
फलंवापुष्पंवा परिमलजलंवा करतले
कृतंचेत्कल्याण्या मदनसमरूपोनमहिषो
भवामीत्यायान्तं हतमथ पदाऽरिंविदधती ॥ ५५ ॥
सदाचामुण्डाम्बा जयति जगती तोषणपरा
किमेताहेतीर्धारयसि मृदुले स्वे करतले ।
किमेतां भीष्मामापतसि रणभूमिं वद ममे-
त्ययुध्यन्तं पद्भ्यां परमथपरासुं विदधती ॥ ५६ ॥
सदाचामुण्डाम्बा जयति जगती पोषणपरा
नमुष्टेर्द्रष्टेस्ते नखलु परशोः किंतुभृकुटेः ।
स्मिताद्वै नोकुन्ताद्रमणिनहिबाणादथगुणात्
जितोस्मीत्युक्तारिं पदहतिपरासुं विदधती ॥ ५७ ॥
सदाचामुण्डाम्बा जयति जगतीपालनपरा
कुमारी नोमारी सुमफलकरानायुधधरा ।

प्रियामेनोमायाभवमदनंवषो न महिषो
भवामीत्याख्यान्तं द्रुमिति हि पदा घ्नन्त्यसुहृदम् ॥ ५९ ॥
सदाचामुण्डाम्बा जयति जगतीलालनपरा
क्षिपैतान्यस्त्राणि द्विपरिपुमिमं प्रेषय गुहाम् ।
रणोर्वी सौधाय प्रतिजहि पतिं मां पदनतं
प्रशाधीत्यर्धोक्तौ परमवजिघांसुः पदहतम् ॥ ६० ॥
सदाचामुण्डाम्बा जयति जगतीवर्धनपरा
दयस्व प्रेक्षस्व व्रजरमणिभुङ्क्ष्वाङ्क्ष्वशेषु ।
परीधत्स्वाधत्स्व स्वपिहि पिब नृत्यस्वगाय
स्मयस्वेत्युद्भ्रान्तं पदहतमरातिं विदधती ॥ ६१ ॥
सदाचामुण्डाम्बा जयति जगती वर्धनपरा
पुरांहं बालालंरणमिदमवीराः सुरवराः ।
स्मरारिं भर्तारं भजस भवं केशवमपुं
नयाग्रेनोहन्यामितिगिरमरिं घ्नत्यथपदा ॥ ६२ ॥
सदाचामुण्डाम्बा जयति जगती मोदनपरा
नताक्ष्यों नोनन्दी नगुहगणनाथौ नसुरराट् ।
नमृत्युर्नो भास्वान्न हरिपुरशत्रू ननृहरिः
कथं हन्यां कन्यामितिलपितमाघ्नत्यसुहृदम् ॥ ६३ ॥
सदाचामुण्डाम्बा जयति जगतीनन्दनपरा
कुमार्यास्ते क्रीडापशुरथ सजीवोधिगभवम् ।
कथंस्यां निर्जीवः सखुररदशृङ्गः कथमहं
भवलेहीत्यर्धोक्तिमरिमरमाघ्नत्यथपदा ॥ ६४ ॥

१ शत्रुम् । २ शीघ्रम् ।



जयति जगति चामुण्डाम्बिका चारुचर्या
सकलमपिखलोकौको बलं दुर्बलं तत् ।
हरमपरमवीर्याद्यां धरामात्मवीराम्
द्विषमितिमहिषं घ्नत्यङ्घ्रिपातैर्वदन्तम् ॥ ६५ ॥
चामुण्डा जननी जयत्यथ जगत्यानम्रचिन्तामणिः
कर्णेकुण्डलमञ्जनं दृशि ललाटे भोललामं सुमम् ।
केशे वक्षसि हारमङ्गदमिदं बाहौ पदे नूपुरं
दत्तं भूपित एपशोभस इति घ्नत्यङ्घ्रिणाङ्गरिपोः ॥ ६६ ॥
चामुण्डा जननी जयत्यथ जगत्यानम्रकल्पाटवी
भोभो कासरदूरएवचसां शौर्यंतवान्यादृशम् ।
वीरोस्येपनियुध्यसे ऽप्यभिमुखः सार्धमयाप्राभृतं
दद्यामद्य गृहाण शोभनमिति घ्नत्यङ्घ्रिणास्यं रिपोः ६७॥
चामुण्डा जननी जयत्यथ जगत्यानम्रकामाशिता
गोप्येषा रणगोधने रिपुगवां दास्येत्र्यघासंसदा ।
नात्रोक्षा नगजो न सप्तवडवा नोकासरोनैणकः
माधावस्व कुतोऽस्ति तेभयमिति घ्नत्यङ्घ्रिपातैरारिम् ६८॥
चामुण्डा जननी जयत्यथ जगत्यानम्रतापापगा
नत्रस्तोसि हरेर्गजं नगणयस्यश्वाञ्जिघांसस्यमून् ।
चण्डो ऽसि प्रणयो मम त्वयि महान् कण्डूमहिष्या मम
शृङ्गेणापनयेति कासरमरिं घ्नत्यङ्घ्रिपातैः क्रुधा ॥ ६९ ॥
चामुण्डा जननी जयत्यथ जगत्यानम्रतृष्णासुधा
रक्षोधीशसुरागणा गुहगणेशौ ब्रह्मविष्ण्वीश्वराः ।

१ कामधेनूनां शाद्वलक्षेत्रम् ।

*

नेच्छन्तो मृथभोजनं क्रतुभुजस्तेजो निदध्युर्मयि
जेतारं महिषी भजेयमिति वाक् घ्नत्यङ्घ्रिपातैरारिम् ॥
चामुण्डा जननी जयत्यथ जगत्यानम्रतृष्णाखनी
कन्याहं महिषस्वयंवरपतिं वृण्वे भवन्तं पतिम् ।
नान्यो मेत्वदृते सदृक्तव भवेन्नान्या समा मां विना
तिष्ठात्राभिमुखो भर्त्र प्रियतमे त्वंप्रचायुधा घ्नत्यरिम् ॥
चामुण्डा जननी जयत्यथ जगत्यानश्रतृष्णाम्बुधिः
भो भो राक्षसराज नास्मि महिषी त्वामुत्सहे नीरदम् ।
सिंहैरावणमूकरा हि भवता सर्वेजिता दन्तिनः
त्वां दंष्ट्रालुमियं करोमि महिषेत्यास्ये पदाघ्नत्यरिम् ॥
चामुण्डा जननी जयत्यथ जगत्यानम्रतापप्रपा
सर्वैरक्षिभिरद्य पश्य पुरतो नाट्यं सहस्राक्षभोः ।
सप्ताश्वाश्वियया हि वर्णय चिरं तत्सप्तजिह्वक्षसे
अग्रे यन्महिषीं न मुञ्च महिषेत्यास्येंघ्रिणा घ्नत्यरिम् ॥७३॥
चमुण्डा जननी जयत्यथ जगत्यानम्रदाहाच्छवाः
एकैके प्रमथाः सुरागुहगणेशौ ब्रह्मविष्ण्वीश्वराः ।
जेत्रामी विजितास्त्वया ननु समेता एव सर्वे मयि
नारी नाहमरिर्महांस्तव जहीत्यास्ये पदाघ्नत्यरिम् ॥७४॥
चामुण्डा जननी जयत्यथ जगत्यानम्रदाहान्धुवाः
रक्षोराजसमागते त्वयि चिरादेषा महिष्युत्सुका ।
भुञ्जेऽङ्गेपि समादधे परिदधे गायामि नृत्याम्यथ
प्रेक्षस्व प्रणयिन् प्रियामिति पदाघ्नत्यङ्गमङ्गं रिपोः ॥७२॥

१ दन्तहीनम्, जलतर्पणप्रदम् । २ युद्धभोजनम् ।



चामुण्डा जननी जयत्यथ जगत्यानम्रमोहाभ्रिया
मा मा राक्षसराज मारय सुरानेते हि मे किङ्कराः ।
नन्दी भृङ्गिरिटिर्वटुस्तुतिपटू स्कन्दैकदन्तौ सुता-
वेतौ पालय लालयाद्यमहिषीं मामित्यरिं हिंसती ॥७६॥
जयति जगति चामुण्डाम्बिका रम्यकाम्या
हरहरिद्रुहिणां स्तां स्त्रीं स्वगणाग्रान् बुभुक्षुम् ।
सुरगुहगणनाथांस्ताननाथान् बुभुक्षुम्
महिषमहितमीषत्पादपातैर्जिघांसुः ॥७७॥
जयति जगति श्रीचामुण्डाम्बिका विकटोत्सवा
पथित महिषा मातुर्नन्तुरनभ्युपजग्मुषी ।
सुरपरिवृढान्नेच्छन्त्यात्मस्तुतीन् स्तुतिकारिणः
गुहगणपती जातावन्यौ सुतावथ जानती ॥७८॥
जयति जगति श्रीचामुण्डाम्बिका प्रकटोदया
मथितमहिषा पादापातैर्मृथादथ निर्गता ।
द्विषति मिषति प्राणित्वेषा कथं तनयावयो-
रिति निगदतोः पित्रोरंघ्रयोर्नता सहखात्सुमैः ॥७९॥
जयति जगति श्रीचामुण्डाम्बिका सकलाकृपा
मथितमहिषा पादापातैर्मृथाद्गृहमागता ।
पतति खसुमे मुक्तालाजाः सहभवराशिषः
सरसिजभवप्रत्तामूर्ध्ना जिघृक्षुरथासिता ॥८०॥
जयति जगति श्रीचामुण्डाम्बिका सकलादया
मथित महिषा पादापातैर्मृथाद्गृहमागता ।
मम मम भणेत्याकर्पन्त्योर्जयाविजयाख्ययोः
वदतमिह किं ब्रूयामित्यालिलिङ्गिपुरप्युभे ॥८१॥

१ वृष्टिः ।

जयति जगति श्रीचामुण्डाम्बिका प्रकटाकृपा
मथितमहिषा पादपातैर्मृथाद्गृहमागता ।
धवमथ शिवं देवं दृष्ट्वा परिग्रहलोलुपं
सुरसरिदिवोदन्वन्तं त्रिः प्रदक्षिणमीयूषी ॥ ८२ ॥

जयति जगति श्रीचामुण्डाम्बिका प्रकटादया
मथित महिषा पादापातैर्मृथाद्गृहमागता ।
भगिनि विजितारातिर्नन्वक्षता खलु कौस्तुभं
कुरुकर इति प्रोक्तास्तूक्तिर्ददत्यनुशार्ङ्गिणे ॥ ८३ ॥

जयति जगति श्रीचामुण्डाम्बिका सकलाघृणा
मथितमहिषा पादाप तैर्मृथाद्गृहमागता ।
भगवति जितोवैर्यस्माकं त्वया करदा वयं
इति मघवताभ्येत्योक्तास्य दिशन्त्यतुलार्हणाम् ॥ ८४ ॥

जयति जगति श्रीचामुण्डाम्बिका प्रकटाघृणा
मथितमहिषा पादपातैर्मृथाद्गृहमागता ।
कृत पदनती दिष्ट्याम्बानौ जितारिरितीक्षितौ
गुहगणपती मूर्ध्न्याघ्राय स्पृशन्त्युदिताशिषौ ॥ ८५ ॥

जयति जगति श्रीचामुण्डाम्बिका प्रकटोत्सवा
मथित महिषा पादापातैर्मृथाद्गृहमागता ।
कमलकुमुदे ढौकित्वांघ्रयोः कृताञ्जलि तस्थुषोः
कुशल मनुयुञ्जानाचार्घ्यं ददत्यरुणाब्जयोः ॥ ८६ ॥

जयति जगति श्रीचामुण्डाम्बिका प्रकटाभिदा
मथितमहिषा पादापातैर्मृथाद्गृहमागता ।

१ सूर्यचन्द्रयोः ।



फलकुसुमताम्बूलं भक्त्या निवेदयतो रुरी-
कृतमिति चिराभीष्टं दित्सुस्तयोः प्रमथेन्द्रयोः ॥ ८७ ॥

चामुण्डाम्बा जयति जगतीप्रार्थनाकामधेनुः
मर्यादां पालयितुमखिलान्यायुधान्यादधाना ।
कृत्या केयूरककटकरत्नाङ्गुलीयानि पाण्योः
शूलस्पृष्टं महिषमहितं घ्नन्त्यमुं पादपातैः ॥ ८८ ॥

चामुण्डाम्बा जयति जगतीप्रार्थनाकल्पवल्ली
आशीराशीनि वसुमनसामंशलेशान् गृहीत्वा ।
पादापातैर्महिषमहितं मर्दयित्वार्दयित्वा
माङ्गल्यानीव सुरसुदृशामायुधान्यर्पयन्ती ॥ ८९ ॥

चामुण्डाम्बा जयति जगतीपालनायत्तचित्ता
यातुप्रेतेष्विव गगनमार्गे स्थितेषु ध्वजेषु ।
जिष्णोर्दृष्टिष्विव परिणतास्वग्रतः पुष्पवृष्टि-
ष्वंघ्रयाघातैर्महिषमहितं निर्दयं गर्दयन्ती ॥ ९० ॥

चामुण्डाम्बा जयति जगती लालनायत्तचित्ता
रक्षः स्त्रीणां प्रलपन इव प्रस्तुते स्तोत्रगाने ।
भूम्यां पुष्टीरिव सुमनसां पुष्पवृष्टीर्वहन्त्यां
पादापातैर्महिषमहितं निर्दया मर्दयन्ती ॥ ९१ ॥

चामुण्डाम्बा जयति जगतीतोषणायत्तचित्ता
क्रव्यादीभिर्घुरसि च सुरैर्दुन्दुभौ चाहते द्राक् ।
मेदिन्या मूर्त्विजि च सुरराजे च पुष्पाणिवर्ष-
त्यंघ्रयापातैर्महिषमहितं निर्दयं मर्दयन्ती ॥ ९२ ॥

चामुण्डाम्बा जयति जगतीपोषणायत्तचित्ता
क्रव्यादाहाहोपपदमुदिते स्वप्सरोलास्यहर्ष[illegible]

यूपाकर्षानुपदभ्रमरैः पुष्पवर्षे प्रवृत्ते
पादापातैर्माहिषमहितं निर्दयं मर्दयन्ती ॥ ९३ ॥

चामुण्डाम्बा जयति जगतीमोदनायत्तचित्ता
क्राव्याच्चित्यानल इव तते देवकोलाहले द्राक् ।
पुष्पं व्योमन्यसुर सुदृशां बाष्पमक्ष्णीव वर्ष-
न्त्यंघ्रयापातैर्महिषमहितं निर्दयं मर्दयन्ती ॥ ९४ ॥

चामुण्डाम्बा जयति जगतीनन्दनायत्तचित्ता
मूर्तेष्टा पूर्तमिव चलितं वीक्ष्य चक्रं सुराणाम् ।
स्मारं स्मारं स्वजनपरिवारात्मनिन्दोक्तिमुक्तां
पादापातैर्माहिषमहितं निर्दयंमर्दयन्ती ॥ ९५ ॥

चामुण्डम्बा जयति जगतीवर्धनायत्तचित्ता
भो भो नन्वीप्सितफलमिदं माल्यमेतत्तवेष्टम् ।
ताम्बूलं वल्लभमित इतः किं परा तेऽस्ति वाञ्छे-
न्त्यघ्र्यापातैर्महिषमहितं निर्दयं मर्दयन्ती ॥ ९६ ॥

जयति जगति श्रीचामुण्डाम्बिका प्रकृतिः परा
मशकशिशुकस्ते मत्तोकः शिरस्यथ ते पदम् ।
अभयमियमाधध्यां शूरो निवारय मामिति
प्रपदहतिभिः प्रेतं कुर्वत्यरिं महिषासुरम् ॥ ९७ ॥

चामुण्डा जननी त्यथ जगत्याब्रह्मकीटाश्रीता
भो भो मक्षिकभिक्षुकस्तव समेब्रालः सुतो लालितः ।
पादं मूर्ध्निकरोमि ते क्षिपुसमीक्षे शौर्यमेषा तवे
त्यंघ्रयाघातपरासुमेव महिषं तं विद्विषं प्रोचुषी ॥ ९८ ॥

चामुण्डा जननी जयत्यथ जगत्याब्रह्मकीटार्भका
रे रे दर्दुरदारगस्तवसमे भ्रातानुजातः स्मृतः ।



शीर्ष्णे ते पदताडनं ननुकरोमीक्षे क्षमश्चेत्क्षिपे-
त्यंघ्रयाघातपरासुमेव महिषंतं विद्विषं प्रोचुषी ॥ ९९ ॥

चामुण्डा जननी जयत्यथ जगत्याब्रह्मकीटानता
यौते स्तोत्रपटू मम हितौ वीणानकातोदकौ ।
नृत्यं मूर्ध्नि करोमि ते ननु लये पादाविमौ कुट्टिता
वित्यंघ्रिद्वय मर्दितं महिषमिन्द्रारिं परं प्रोचुषी ॥१००॥

चामुण्डिका त्रिजगतीजननी जयेत्सा
पादद्वयानमनमाप्रहतोत्तमारिः ।
देवप्रियाय धृततत्सकलास्त्रसारा
साराययानगणयन्त्यरिमंघ्रिरेणोः ॥ १०१ ॥

चामुण्डिका त्रिजगतीजननी जयेत्सा
पादप्रपातकलया दलितारिथूर्धा ।
शूरांश्चिकीर्षुरथकेवलमिन्द्रमुख्यान्
देवां स्तदाशिषमिवांशमुपाददाना ॥ १०२ ॥

चामुण्डिका त्रिजगतीजननी जयेत्सा
पादावघात कुणपीकृतकोणपेन्द्रा ।
क्रुद्धं युयुत्सुमपि मातृगणं निवार्य
नत्वा चिकीर्षुरथपार्षदमीक्षमाणाम् ॥ १०३ ॥

चामुण्डिका त्रिजगतीजननी जयेत्सा
पादप्रपातहतकासरशक्रशत्रुः ।
क्रूरक्रुधो भ्रुकुटिरौद्रमुखान् युयुत्सून्
इच्छुः परिच्छदममून् प्रमथप्रवीरान् ॥ १०४ ॥

चामुण्डिका त्रिजगतीजननी जयेत्सा
पादप्रहार हत सैरिभयातु सिंहा ।

षड्वक्त्र हस्तिवदनौ सरुषौ युयुत्सू
पृष्ठे चिकीर्षुरथ यायुधधारिणौ तौ ॥ १०५ ॥
चामुण्डिका त्रिजगतीजननी जयेत्सा
पदावघातहतवज्रिविरोधिवया ।
सृष्टिस्थिति प्रलयकारकमायुयुत्सु
मूर्तित्रयं खनयनत्रयमूचुषी तत् ॥ १०६ ॥
चामुण्डिका त्रिजगतीजननी जयेत्सा
पादोर्मिपात हत कासरयातुपोतां ।
साहाय्यकाय सहजं समुपेयिवांसं
चक्रायुधं कवचमात्मभये विधित्सुः ॥ १०७ ॥
चामुण्डिका त्रिजगतीजननी जयेत्सा
पादाशनिप्रहतसैरिभशैलशृङ्गा ।
संरक्षणाय सभयं समुपेयिवांसं
रक्षामणिं निकट एव निधित्सुरीशम् ॥ १०८ ॥
पौत्रंलिङ्गार्य वर्यो द्विजकुलतिलकास्त्रिम्मपार्यस्तनूजं
भारद्वाजः कुलीनं मुनिपतिरवनिः स्वंचनारायणोदा ।
आशीर्भिः सत्यवाचोयमिहभुविशिशुं वर्धयामासुरार्याः
सश्रीकण्टोङ्घ्रिप्रपद्यैर्वयाति शतकमेतत्कृतं चर्चिकायाः ॥
इति चामुण्डास्तुतिमाला संपूर्णम् ।
शुभमस्तु ।

---

१ प्लवः ।

॥ श्रीरघुनन्दनपरब्रह्मणेनमः ॥
॥ श्रीमते श्रीनिगमान्त महादेशिकायनमः ॥

# ॥ आर्यासप्तशती ॥

[1]देवं सह चिन्मुद्रं देव्या दययेव मूर्तयाश्लिष्टं ।
पदपरिचर्यापरवश पवनसुतानन्दितं वन्दे ॥ १ ॥
महितं तन्त्रचतुष्टयपारं गमितैरनेकशिष्यगणैः ।
चंपकवनैकवसतिं गोपालार्यं पितामहमुपासे ॥ २ ॥
यन्नामसाम्यमात्रं निगमान्तगुरोश्चरित्र संकथने ।
प्रोत्साहयते ममापि मिततममतिमल्पविज्ञानम् ॥ ३ ॥
आर्यगुणग्रहणरता दोषान्शब्दार्थयो स्सहिष्यन्ते ।
माक्षिकमपेक्षमाणाः किमु क्षमन्ते न मक्षिकादंशान् ॥ ४ ॥
का हानिरपरितोषात्तेषां दोषयाति यन्मनोसूया ।
अखिलाह्लादिन इन्दोरंधापरितोषणे न को दोषः ॥ ५ ॥
अस्ति हि काञ्चीनाम्नी जनदृष्टिशिवङ्करी नगरी ।
माधवमाराधयितुं यत्र विधाता ततान हयमेधम् ॥ ६ ॥
काञ्चीतिनाम यस्याः कमलाकान्तोऽत्रकञ्जपीठेन ।
अञ्चित इत्यमुमर्थं स्पष्टं शिष्टान्समाचष्टे ॥ ७ ॥
त्रिदशालयतक्ष्णा किल तुष्ट्यै स्रष्टुर्यियक्षमाणस्य ।
त्वष्ट्रा विनिर्मिता या किमु वर्ण्यं रामणीयकं तस्याः ॥ ८ ॥
फुल्लारविंदनिर्यन्मकरन्दाम्रेड्यमानमाधुर्या ।
कल्मषमोषणधुर्या फणिपतिसरसी विराजते यत्र ॥ ९ ॥

---

१ चरणशुश्रूषा परवशहनुमदानन्दितत्वविशिष्टो देवशब्दार्थस्तु साक्षाद्रामभद्रः ।

२ कर्ठ-अनेन ग्रंथ कर्ता गोपालाचार्यनामेत्युक्तं भवति । श्लोकद्वयमेकान्वयं - यः पूर्वं निगमान्त सिद्धान्त निर्वहणायादिशेषांशं रामानुजयतिराजमाविरबीभवत् स एव श्रीनि वासोघंटानिगमान्तदेशिकाकारेणावातारयदिति प्रगटकार्थः ।

प्रातिबिंबितस्सरस्यां यस्यां सूर्यस्तरङ्गसाहस्त्र्याः ।
फणमणिसहस्रशोभस्तनुते सार्थामनंताख्याम् ॥ १० ॥
वेगवतीरूपधृता वाण्या विजिघांसितं वृतं हि विधेः ।
हरिणा सत्यमिति पुरस्सत्यक्षेत्राभिधापिसार्थैव ॥ ११ ॥
सफलीकरणच्छलतो विधिना विधिवत्कृतस्य यागस्य ।
करिगिरिशिरो विहारी यत्र मुरारिश्शिश्नेतष्टदो जयति ॥ १२ ॥
अपदिश्य किंचिदित्थं यद्दिशतीष्टानि शिष्टवर्गेभ्यः ।
द्विरदाद्रिनायकोसौ प्रथते तस्माद्धिवरदराज इति ॥ १३ ॥
तस्यां पुर्यामासी यज्वा नाम्ना हि पुंडरीकाक्षः ।
विश्वामित्रमहामुनिसंतति कलशार्णवस्य पूर्णेन्दुः ॥ १४ ॥
वाणीविलासपात्रं काञ्च्यां कृतयज्ञतोषितरमेशं ।
चतुराननश्च सन्तो मुदिता यमुदाहरन्ति धातारम् ॥ १५ ॥
धीरात्तस्मात्सूरेस्सुगुणोऽनन्ताभिधस्तनयः ।
सहृदयहृदयानन्दी मलयादिव चंदनो जज्ञे ॥ १६ ॥
अत्रिमुनिगोत्रवारिज मित्रश्रीरंगराजविबुधमणेः ।
तनयामुपायतासौ तोतारंबाभिधामनघाम् ॥ १७ ॥
नामाकर्णनमात्रभृंशितदुर्वादिगर्वसर्वस्वः ।
स हि वादिहंसजलदाचार्यो यस्या स्सहोदरोधीरः ॥ १८ ॥
कमलाकान्तंचित्ते कलयन्नानन्दतुन्दिलस्वान्तः ।
काञ्च्यामनन्तसूरिः कतिपयदिवसाननैपीत्सः ॥ १९ ॥
अत्रान्तरेऽचिचिन्तत्पन्नगनगनायको धरणौ ।
उद्घोषयितुं तत्वं घंटामे प्रेषणीयेति ॥ २० ॥
कलिमलकल्मषधिषणैः प्रकटप्रच्छिन्ननास्तिककदंबैः ।
निगमान्तासिद्धमर्थं दूषितमालक्ष्ययेनपुरा ॥ २१ ॥
अचलमिवनिश्चलत्वं प्रापयितुं तं रहस्यार्थं ।
फणिपतिशैलो यतिपत्याकारेणावनाववातारि ॥ २२ ॥



कमलोपलाल्यचरणो विहरणपदवीषु वेदशिखरेषु ।
कंटकसंकुलभावं प्रसृतं सहतां कथंकारम् ॥ २३ ॥
क्षुद्रोपिहन्त यतते विहरणभूमिं विकंटकीकर्तुं ।
नाद्भुतमेतत्सद्भिर्लक्ष्मीकान्तस्तथा तनोतीति ॥ २४ ॥
कुमतिपरिकल्पितार्थै र्दोषोन्मेषेण वेदेषु ।
नारायणस्य शंके संजाता श्वासकौशशंकोति ॥ २५ ॥
इत्थं सङ्कल्पितवति भगवति परिपक्वभागधेयचयः ।
स कदाचिदनन्तार्यो रात्रौ यामावशिष्टायाम् ॥ २६ ॥
स्वप्नेऽदर्शत्पुरुषं कञ्चन कन्दर्पकोटिसौन्दर्यं ।
कमलावनमालाभ्यां कौस्तुभमणिना च भासुरोरस्कम् ॥ २७ ॥
दधतं कांचीग्रथितं धिक्कृतनिष्टप्तकाञ्चनं वसनं ।
आजानुदीर्घबाहुद्वयपरिरब्धावनीनीलम् ॥ २८ ॥
कुण्डलमण्डितगण्डं बिभृतमधिमौलि हाटककिरीटम् ।
शंखसुदर्शनविलसत्पाणिं दयमाननयनान्तम् ॥ २९ ॥
तुंगं सुमेरुशृङ्गं श्रयतोनूनस्यजलदस्य ।
आभामनुकुर्वाणं किंचन सौवर्णपीठमध्यास्य ॥ ३० ॥
दृष्ट्वैव देवमग्रेऽनन्तसुधीर्विस्मितान्तरंगोयम् ।
निद्रारंभध्याताकारानुकृतेर्हरिमवेदीत् ॥ ३१ ॥
कौतुकपरवशहृदयस्संमोदाश्रूणिवर्षुकोतितमाम् ।
पाद्यार्घ्येऽअप्यददात्पुष्पाञ्जलिभिश्च पूजयामास ॥ ३२ ॥
भक्त्या गद्गदकंठः किं वा कर्तव्यमित्यजानानः ।
अवमं मामव भगवन्निति शश्वत्प्रण्यपप्तदुरुकंपः ॥ ३३ ॥
माभैषीरितिबाहुभिरुत्थाप्यैनं गजेन्द्रसंत्राता ।
आचष्ट स्पष्टममुं घनगंभीरस्वरोगिरंमधुरां ॥ ३४ ॥

---

३ यस्यानिश्वासितं वेदाइति श्रुत्यर्थोव्यज्यते । वेदरूपेषु निश्वासेषु कुमतिभिरपार्थ-परिकल्पनरूपोदोषः श्वासरोगायितइति भावः ।

वत्स ! वृषाद्रिशिरस्तः प्राप्तमां श्रीनिवासमवगच्छ ।
शुभतमगुणगणभरितं तनयं विनयोज्वलं प्रयच्छामि ॥३५॥
भाद्रेमासे वृषगिरिमागच्छास्माकमुत्सवोभविता ।
निष्कारणकरुणो सावनुशिष्येत्थं तिरोदधेसद्यः ॥३६॥
बालार्ककोटिललितं कमलाकमनं विचिन्वानः ।
विलुठन्शयनेऽबुध्यत निरचैषीत्स्वप्न एव दृष्टइति ॥३७॥
रोमाञ्चितमूर्तिरभूत्करुणामनणीयसीं विचिन्त्यविभोः ।
हृष्टमनाश्शयनीयात्स्विद्यद्गात्रोगुरुरुदस्थात् ॥३८॥
सानन्दं प्रेयस्यै विनिवेद्यामुं प्रियमुदन्तम् ।
प्रत्यैक्षिष्टसकालं तं किल हितया तया साकम् ॥ ३९ ॥
अथ शेषशैलनेतुश्शिष्टजनानन्दकन्दळीकन्दः ।
जगदुज्जीवनहेतुर्भाद्रेमास्युत्सव उपागात् ॥ ४० ॥
हरिवचनामृततृप्तोगुरुरेषगिरिंसदारआरुक्षत् ।
श्रीवासालयकेतन शिखरस्थोऽध्युत्सवायपक्षीन्द्रः ॥ ४१ ॥
मन्देतरमोदोदयखंडितमार्गश्रमो मुकुन्दस्य ।
पादारविन्दमनमद्रुस्ततमस्संततिंतमस्तावीत् ॥ ४२ ॥
जगतिजनंजनमस्मिन्मारंमारं च खिद्यमानानाम् ।
भगवन्नभयायभवान्जागर्त्येका गतिर्भविनाम् ॥ ४३ ॥
स्वीकृत्याञ्जलिमूल्यं पणसे स्वपदंददत्पणायाङ्घ्रिः ।
आयव्ययचिंता ते का वा लक्ष्मीश नित्यतृप्तस्य ॥ ४४ ॥
तत्तादृशपारम्यो मत्स्याकृत्या स्फुट व्यवारीस्त्वम् ।
सद्विद्यायैसूनोः कथमपि चतुराननस्य यत्यामिति ॥ ४५ ॥
कमठाकृतिना कृपया मज्जनसमकालमुद्धृतोपिगिरौ ।
आवर्तगर्तपूरकडिंडीरइतिक्षणं सुरैर्मुमुहे ॥ ४६ ॥

४ श्रीनिवासमहोत्सवे ध्वजारोहणमभूदितिभावः ।
५ यत्र सालिले वस्तुमज्जति तत्र मज्जनानन्तरकालेआवर्तः सालिलवलनवशेन फेनश्चजायतइत्यानुभाविकं ।



श्वेतवराहाकारो देवैर्दृष्टस्त्वमुद्धरन्धरणीं ।
अखिलाह्लादीकश्चन सन्तत पूर्णो मृगांक एष इति ॥ ४७ ॥
दंष्ट्राभा वनमाला रिपुरक्तझरी च सङ्गताअदधुः ।
नृहरेस्तेकिल वक्षसि गङ्गायमुनासरस्वतीशोभाम् ॥ ४८ ॥
वामनरूपेणसुरान्भवता गोपयता विद्वतम् ।
कथमप्यवरोपकृतौ यतमानोद्रागियात्प्रवृद्धिमिति ॥ ४९ ॥
अतिगंभीरं त्वां किल दृष्ट्वा कटिलग्न मौञ्जीकं ।
अपसर्त्स्रेबुधिनामन्दरधरशंकया नियतम् ॥ ५० ॥
शबरीदत्तः कन्दस्सादरमादाय येन परिभुक्तः ।
भक्तिक्रेयं तादृक्सौलभ्यं व्याचकार तं वन्दे ॥ ५१ ॥
बामाङ्कमधिवसन्त्या लावण्य झरीविदेहतनयायाः ।
यस्मिन्महेन्द्रनीलाचलनिलया चन्द्रिकेवबाभाति ॥ ५२ ॥
सिंहासनान्तिकस्थो दक्षिण चरणं प्रवाळमृदु यस्य ।
जीवितफलमिति वहते हनुमान्सत्फलजिघृक्षुराबाल्यात् ॥५३॥
उद्धृतकुरुपुरधरणीः खर्वीकृतरेवतीरयणीः ।
हालधरीर्लीलास्तेयमुनासंभेदिनीस्स्मराम्यतुलाः ॥ ५४ ॥
परमदययावतीर्णं परमपदात्त्वां परोरजसः ।
गोकुलधूळीपिञ्जरमीडे गोपालबालकाकारम् ॥ ५५ ॥
विद्रावयितुं कल्मषबहुळं कलिपूरुषंपरुषम् ।
सरयं हयमारूढो धरणावाविर्भविष्यसि दयाळो ॥ ५६ ॥
इत्थं स्तुत्वाष्टादशवार्यै दिङ्नागसौखशायनिकं ।
उत्सवमनुभूय विभोश्श्रुतियुगळीगीयमानविभवस्य ॥ ५७ ॥
उपकार्यांगुरुरगम चरमाचल शृंगमंशुमालीच ।
संध्यामुपास्य भुक्त्वा गुरुरस्वाप्सीद्धरिं हृदिध्यायन् ॥ ५८ ॥
तस्यामेवनिशायां तस्मै पूर्वं प्रतिश्रुतां वाणीं ।
सफलीकर्तुं भगवान्स जजागाराथ सत्यसङ्कल्पः ॥ ५९ ॥

धवळोर्ध्वपुण्ड्रललितद्विजरूपधरो विचित्रमायावी ।
सुरवैरिगर्वहन्त्रीं घण्टां परिग्रह्य मन्दिरान्निरगात् ॥ ६० ॥
उच्चैराह्वयदनघो गत्वानन्तार्यमन्दिरालिन्दं ।
अद्राक्षीद्द्विपेन्द्रं गुरुरुद्धद्धःकवाटमुद्घाट्य ॥ ६१ ॥
भगवन्कोनु भवानिति प्रच्छन्नतिमात्रविस्मितोऽनंसीत् ।
तद्भक्तथाकृष्टमना द्विजरूपी प्रत्यभाणीत्तम् ॥ ६२ ॥
अत्रत्यो विप्रोहं हरिदत्ताभ्याहृता च घण्टेयं ।
स्वीकुर्वेनां निगिरतु तव पत्नी सोष्यते सुतमनंघम् ॥ ६३ ॥
इत्यादिश्य प्रादाद्धण्टां गुरुरप्यगृह्णात्तां ।
लघुभूतां तामगिलन्मुदिता दयिताप्यमुष्य संगृह्य ॥ ६४ ॥
न्यवृतत्कतैवाविप्रः कार्यं चिरकालकांक्षितं कृत्वा ।
रजनी च सा व्यरंसीदुदयत मार्ताण्डमण्डलमखंडम् ॥ ६५ ॥
प्राभातिकार्चनार्थं देवगृहानर्चका न्यविक्षन्त ।
नैक्षिषत तत्र घंटामन्विष्यन्तो व्यचारिषुः परितः ॥ ६६ ॥
क्वाप्येनां नाविन्दन्समशेरत ते परस्परमुदीक्ष्य ।
काल्यार्हणाविलंबासहना अधिकारिणोप्युपागच्छन् ॥ ६७ ॥
घणघणरणितज्ञापितदनुजद्वेषणानिषेवणावसरा ।
क्षणविश्लिष्टा घण्टा नज्ञायेताञ्जनाचले केन ॥ ६८ ॥
हरिभवने मिलितेष्वथ विस्मयशोकाकुलेषुलोकेषु ।
वेंकटनायककोशागाराध्यक्षो यतिरवादीत् ॥ ६९ ॥
अलमलमावेगेनानन्तनिरीन्द्रस्य नायकेनाहम् ।
करुणा गुरुणा प्रभुणा स्वप्ने हरिणा निशीत्थमनुशिष्टः ॥ ७० ॥
घंटोदेष्यति भूमौ श्रीमान्निगमान्तदेशिकाकारा ।
साऽनन्तसूरिगृहिणीगर्भपुटीं निशि मयैवनीतेति ॥ ७१ ॥
शंकिषत मा भवन्तो वेंकटनेता हि चित्रसंकल्पः।
काञ्च्या एत्यात्रास्तेऽनन्तार्योप्युत्सवालुलोकिषया ॥ ७२ ॥



इत्युक्ते यतिना ते चिंतापेता हरेः परीवाराः ।
ईचिक्षिषवोनन्ताचार्यं प्रापुस्तदीयमावासम् ॥ ७३ ॥
औपासिकं कर्म गुरुर्निखिलं निर्माय तां कृपामेव ।
संततमन्तर्ध्यायन्नानन्दाश्रूण्यवर्तयन्नितराम् ॥ ७४ ॥
प्राञ्जलयस्सर्वजना मिलिता गुरुणा निशम्य वृत्तांतम् ।
अश्लाघिषत गुरोस्तां भक्तिं केचित्परे हरिकृपांताम् ॥ ७५ ॥
अधिकारिणोथ मुदिता विस्मितचित्ता अयासिषुस्स्वगृहान् ।
उत्सवमनुभूय गुरुर्दयितासहितः पुरीं काञ्चीम् ॥ ७६ ॥
उपनिषदामुल्लासं सत्पथमणिदीपमाश्रयं सुधियां
गुरुगृहिणी गर्भमधात्कौतस्कुतदावपावकं कमपि ॥ ७७ ॥
दधती कुक्षौ जगतीभूषणमतुलं गुणोज्वलंसुदती ।
अत्यजदितराभरणान्याहारेपि क्रमेण मन्दरुचिः ॥ ७८ ॥
अभ्यस्यन्निव नेतुं वैशद्यं तामकृत्रिमां वाणीं ।
प्रथमं जननीवदनं गर्भो ऽनैषीदतीव वैशद्यम् ॥ ७९ ॥
आचम्य तमांसि जगत्सत्वोद्रिक्तं चिकीर्षुरेषशिशुः ।
चूषणसौकर्यार्थं नैल्यच्छलतः कुचाग्रमनयत्तत् ॥ ८० ॥
वक्ष्यन्हरिपारम्यं सेहे नायं वलित्रितयम् ।
तिर्यक्पुण्ड्राकारंस्वावासस्योदरस्य मुखभागे ॥ ८१ ॥
अन्तर्वत्नी भक्षितुमयातिष्ट विशुद्धमृत्तिकाखण्डम् ।
ववलेमुदेव जठरे सन्मार्गस्थापनाचार्यः ॥ ८५ ॥
सीमन्तोन्नयनाद्यानि व्यातानीद्गुरुर्हि दयितायाः ।
चत्वारिंशत्संस्करणीविधिसंवेदी यथाकालम् ॥ ८३ ॥
गुरुभाविनंवहन्ती गर्भं प्रेयस्यनंतगुरोः ।
निष्कुटमल्लीवल्याः कुसुमावचयेप्यशक्नुवानाभूत् ॥ ८४ ॥
फलभर विनमच्छालिं वसुधां क्षेत्रीव भूरिकाषितान्तः ।
प्रसवोन्मुखीं प्रियां स्वां पश्यन्स गुरुर्भृशमनन्दीत् ॥ ८५ ॥

सप्तत्यधिकत्रिशश्चसहितेषु कलेतीतुस्सहस्रेषु । (४३७०)
वर्षेषु प्रतियातेष्वन्त्ये तत्रैव विभवाख्ये ॥ ८६ ॥
मासि नभस्ये महिते श्रवणाभिख्ये च नक्षत्रे ।
घण्टानन्तार्यगुरोः पुत्राकारेण भव्यवातारीत् ॥ ८७ ॥
कौस्तुभइव कलशाब्दे हरिणा हृदयेन सर्वदाधार्यः
सर्वार्थसिद्धितोषित सुमनोबृन्दश्चकल्पवृक्ष इव ॥ ८८ ॥
सच्छास्त्रादिव बोधश्चन्द्रादिव सर्वलोकसंतोषः ।
स्वच्छस्वच्छविरुद्गात्पुत्रोऽनन्तार्यधीमतः कृतिनः ॥ ८९ ॥
इष्टान्कतिपयशिष्टान् हृष्टमना मन्दिरं समानीय ।
अथ जातकर्म चक्रेऽनन्ताचार्य श्शिशोर्यथाविभवम् ॥ ९० ॥
कमलाविलासिहृदयो ल्लासकरं भूरिकर्मनिर्मातुम् ।
अरणेर्मथितमिवानलमात्मजमालोकयन्मुमुदे ॥ ९१ ॥
सुतरूपधेयमतुलं दृष्ट्वा विदधेस्य नामधेयमसौ ।
एकादशेह्नितातो विष्णो नाम्नैव वेंकटेशइति ॥ ९२ ॥
कर्णान्तायतनेत्रं शशिनिभवक्त्रं समुन्नतस्कंधम् ।
बहुपुण्यविभवलब्धं गुरुरपुपत्तं सुतं प्रयत्नेन ॥ ९३ ॥
भूगोळस्य तु निर्णयमाचिराड्डिंभो विधास्यन्सः ।
अवनाववाङ्मुखस्सनशिश्ये प्रष्टुं तदीयमिव तत्वम् ॥ ९४ ॥
युक्तिभिरीश्वरयुगळीसूक्तिसुधामुप्यसाधायिष्यन्ती ।
तेने वदने रदयुगकपटात्सुखबोधसाधनाभिनयम् ॥ ९५ ॥
चित्रकसुन्दरवदनं बालं लंबालकं समालोक्य ।
जननीमुमुदे नितरां नन्दकुमारं यशोदेव ॥ ९६ ॥

६ गुरोस्सूक्तिसुधाहि मन्त्रगतश्रीमत्पदस्य विशिष्टार्थबोधकत्वादिकं साधयित्वा लक्ष्मीनारायणयेरिश्वर्यस्थापितवती इष्ठंहिविदुषामिति नीतिवेदिनां प्रातिस्विकरूपेणवस्तुद्वयं बोधयिष्यतां प्रथमंसंक्षेपेणद्वौ-इत्यर्थबोधकः अंगुळिद्वयेनाभिनयस्सार्वलौकिकः । सुधांकूरा विवोभौरदनौप्रथमतउदायतुरितिभावः ।

क्रमशः

॥ श्रीः ॥

# ॥ गोपालार्या ॥

1. जयत्युद्दण्डदोर्दण्डखण्डितारातिमण्डलः ।
अपारमहिमा सोऽयमञ्जनानन्दवर्द्धनः ॥
2. मुग्धास्मितरुचिविलासितमुखजलजन्यस्तमुरलिकासुषिरम् ।
मुदिररुचि किमपि तेजो मुनिजनहृदयङ्गमं मुहुः स्तौमि ॥
3. क्षणहसितरुदितभीपत्क्षरदश्रुजलाविलाक्षिसरसिरुहम् ।
दरविलसदमलकतिपयदन्तं ध्यायामि गोपशिशुवदनम् ॥
4. लंबालकावृतमुखं लसदास्यनिवेशितांगुलिद्वितयम् ।
लालालवलसदङ्गं लावण्यनिधिं विभावये ललितम् ॥
5. परिचिनु हृदय पदाहतिपातितशकटं पयोधरश्यामम् ।
कुहनोत्तानशयाकृति कोमलतनुकलितगोपिकाकुतुकम् ॥
6. अत्यद्भुतनिजलीलानन्दितनन्दव्रजाङ्गनाहृदयम् ।
तामरसनयनमीडे तत्तादृङ्नन्दगोपसौभाग्यम् ॥
7. सकलदृगासेचनकं समधिकसौन्दर्यसारचातुर्यम् ।
कैशवमनिशमुपासे कमनीयं किमपि शैशवं मनसि ॥
8. परिपीतदनुजयोषाप्राणपयस्यद्भुतानुभावजुषि ।
प्रचुरदयारसभरिते प्रत्यासक्तिं दधातु मम चेतः ॥
9. विस्रस्तकुटिलकबरं विवसनमतसीप्रसूनविमलतनु ।
विनिपातितार्जुनयुगं विभावये डिम्भविलसितं शौरेः ॥
10. कनकमणिकलितविविधाकल्पाहितकान्तिगात्रकमनीयम् ।
चित्ते करोमि सततं तत्तादृक् शौरिताण्डवं ललितम् ॥
11. मंजुलगुञ्जामालामनोहरं दुग्धबिन्दुमसृणाङ्गम् ।
व्रजरथ्यामुखमण्डननिजचंक्रमपाश्रये निधिं भूम्नाम् ॥
12. बलवैरिरत्ननीलं वन्द्यं वत्सानुपालनाभिमतम् ।
वसुदेवपुण्यराशिं बल्लवडिम्भाकृतिं सदा वन्दे ॥

# ॥ श्रीगणनायकाष्टकम् ॥

---

1. श्रियमनपायिनीं प्रदिशतु श्रितकल्पतरुः
शिवतनयः शिरोविधृतशीतमयूखशिशुः ।
अविरतकर्णतालजमरुद्गमनागमनै-
रनभिमतं धुनोत्यभिमतं वितनोति च यः ॥
2. सकलसुरासुरादिशरणीकरणीयपदः
करिवदनः करोतु करुणाजलधिः कुशलम् ।
प्रबलतरान्तरायतिमिरौघनिराकरण-
प्रसृमरचन्द्रिकायितनिरन्तरदन्तरुचिः ॥
3. द्विरदमुखो धुनोतु दुरितानि दुरन्तमद-
त्रिदशविरोधियूथकुमुदाकरतिग्मकरः ।
नतशतकोटिपाणिमुकुटीतटहीरमणि-
प्रचुरमरीचिवीचिगुणितांघ्रिनखांशुचयः ॥
4. कलुषमपाकरोतु कृपया कलभेन्द्रमुखः
कुलगिरिनन्दिनीकुतुकदोहनसंहननः ।
तुलितसुधाझरस्वकरशीकरशीतलता-
शमितनताशयज्वलदशर्मकृशानुशिखः ॥
5. गजवदनो धिनोतु धियमाधिपयोधिवल-
त्सुजनमनःप्लवायितपदाम्बुरुहोऽविरतम् ।
करटकटाहनिर्गलदनर्गलदानझरी-
परिमललोलुभभ्रमदभ्रमदभ्रमरः ॥
6. दिशतु शतक्रतुप्रभृतिनिर्जरतर्जनकृ-
द्दितिजचमूचमूरुमृगराडिभराजमुखः ।
प्रमदमदक्षिणाङ्कविनिवेशितजीवसमा-
घनकुचकुम्भगाढपरिरम्भणकण्टकितः ॥



7. अतुलबलोऽतिवेलमघवन्मदभङ्गकरः
स्फुरदहिनापकारि महिमोन्नतिरूढविधुः ।
हरतु विनायकः स विनताशयसम्मदकृत्
कुटिलगति द्विजिह्वकुलकल्पितविघ्नगणम् ॥
8. निजरदशूलपाशनवशालिशिरोरिगदा-
कुवलयमातुलुङ्गकमलेक्षुशरासकरः ।
दधदथ शुण्डया मणिघटं दयितासहितो
वितरतु कामितं सपदि शक्तिगणाधिपतिः ॥

---

पठ गणनायकाष्टकमिदं प्रयतोऽनुदिनं
कठिनशुचाकुठोत्करकठोरकुठारवरम् ।
विमतपराभवोद्भटनिदाघनवीनघनं
विपलवचोविलासकमलाकरबालरविम् ॥

---

॥ श्रीः ॥

# ॥ ब्रह्माण्डपरिणाहः ॥

---

समुदायः ।
ब्रह्माण्डं नाम ब्रह्मसृष्टानां यावत्पदार्थानां
ब्रह्माण्डादतिरिक्तं न किञ्चिदस्ति । यद्यदस्ति तत्तत् ब्रह्माण्डेऽन्त-
र्भूतम् । अस्य परिणाहमनुमातुमपि नेष्टे पुरुषः, किं पुनः परिमा-
तुम् ? । करमुकुरे मुखवद्यथा महीधरो न प्रतिफलति तथा मनुष्य-
मानसे विपुलमहापदार्थप्रतिबिम्बकेऽपि नैव माति ब्रह्माण्डम् ।
प्रायेण मनुष्याः प्रपञ्चस्य महिमानं न गणयन्ति । कूपवास्त-
व्याः कूर्माः स्वनिवासभूतं कूपमेव यथा महार्णवं मन्यन्ते तथा
भूतलमधिवसन्तो मनुष्या भूपरिमितमेव प्रपञ्चं पश्यन्ति ।

> 'यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवं
> तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
> यदा किञ्चित्किञ्चिद्बुधजनसकाशादधिगतं
> तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥'

ग्रामीणाः स्वस्वग्रामसीमान्तर्गतमेव लोकं मन्वते । पौराणि-
काः पण्डिता हिमवत्सेतुमध्यगतं देशमेव मानुषनिवासोचितं भूभा-
गममन्यन्त । गोलविदस्तु पुराणप्रोक्तं पातालभूमिस्वर्गात्मकं लोक-
त्रयमपि भूपृष्ठावस्थितं प्रकल्प्य चन्द्रमण्डलं पितृलोकमामनन्तः
कुजादिग्रहगोलानामपि लोकान्तरत्वं सम्भावयन्तो गृहचक्रपरिमि-
तमुशन्ति भुवनकोशम् । नवीनाः पुनः प्रकृतिशास्त्रपारदृश्वानो
ग्रहचक्रमिदं बुद्बुदमेकमिव कल्पान्तमहार्णवस्याणुमात्रं वदन्ति
ब्रह्माण्डभाण्डस्य ।

किं नाम ग्रहचक्रम् ? शून्याकाशे परिभ्रमतां ग्रहव्यपदेश्या-
नां गोलानां यूथमिदम् । तत्र परिणाहमहिष्ठः सूर्यो नाभिस्थानम-
धितिष्ठति । तमनु बुधभार्गवौ परिभ्रमतः । तयोः पृष्ठतो भूरियं



परिवर्तते । तस्याः पश्चाद्यथाक्रमं कुजगुरुशनैश्चराः पर्यटन्ति । शनै-
श्चरस्याप्यनुचरौ केवलदृष्टेरदृश्यगोलौ अरुणनप्तनाख्यावर्वाचीन-
दृष्टौ ग्रहौ परिक्रामतः । स्वयं सूर्यानुयायिष्वेषु ग्रहेषु केषाञ्चित्
स्वानुचरा उपग्रहाः सन्ति यथा भुवश्चन्द्रः । एवं सूर्यं परितः परि-
वर्तमानं ग्रहोपग्रहाणां यूथमेव ग्रहचक्रम् ।

ग्रहचक्रादस्मादतिदूरे वर्तन्ते नक्षत्राणि । कस्तानि संख्यातु-
मीष्टे ? कृष्णपक्षरजनीषूत्तानदृष्टयो यदोर्ध्वमनभ्रलिप्त्यां दिवि च-
क्षुषी प्रेषयामस्तदा कति कति न निभालयामः प्रस्फुरन्ति ज्योतींषि ।

> कुत्रचित्प्रविरलाः क्वचिद्घना मांसलाः क्वह च नाणवः क्वचित् ।
> उन्मिषन्ति शतशः सहस्रशस्तारकाः स्फुरितलक्ष्यविग्रहाः ॥

किमेताः सच्चिदानन्दवह्नेः कालानिलसततसन्धुक्ष्यमाणस्य वि-
प्रकीर्णाः स्फुलिङ्गकणाः ? उत कारणजलमहार्णवस्य विद्योतमानाः
सलिलबिन्दुसन्दोहाः ? आहोस्वित् विराट्पुरुषशरीरे विष्वग्वि-
द्योतमाना रोमकूपनिकराः ? उताहो ब्रह्माण्डकटाहखचिता हीरा-
ङ्कुराः ? सर्वाण्येतानि नक्षत्राणि सूर्यवद्गोलचक्राणां नाभिभूतानीति
अनुमिन्वन्ति ज्योतिर्विदः पाश्चात्याः । किं बहुना, आस्माकीनः
सूर्यो भूमेर्नेदिष्ठः क्षुद्रतमश्च नक्षत्रविशेष इति सिद्धान्तितं तैः ।

एषां परिमाणमास्माकग्रहचक्राद्विप्रकर्षं वा मातुं न वयं श-
क्नुमः । तथापि नवीनं कमप्यध्वमानप्रकारमनुरुन्धाना व्यवहराम-
स्तावत् । रात्रौ दूरस्थितः कश्चिन्नालिकास्त्रं प्रयुंक्त इत्यस्तु, तदा
प्रथमं वयमस्त्रोद्द्योतकस्याग्नेरुन्मिषन्तं प्रकाशमवलोकयामः । अनुपदं
धास्त्रनिस्सरणध्वनिं शृणुमः । एतेनानुमीयते प्रकाशो ध्वन्यपेक्षया
वेगवत्तर इति । यतः स ध्वनेरस्मत्कर्णपुटोपगमात् पूर्वमेवास्मन्नय-
नपर्यन्तमध्वानं विलंघ्य दृश्योऽभवत् । सुस्पष्टमेतावता ध्वनिप्रका-
शावतिजंघालावपि महान्तमध्वानमतिलंघितुं कञ्चित् कालमपेक्षेत
एवेति । तत्रात्यन्तजवनः प्रकाशो विनाडिकयैकया ४४६८००यो-
जनान्यतिक्रामतीति बहुभिःप्रयोगैरनुमानैश्च निर्णीतमन्तर्वाणिभिः ।

अथ प्रकृते सूर्यमण्डलात् स्खलितः कोऽपि किरणः २२ विनाडिकाभिरेव भुवं स्पृशति । यतो भूः सूर्यात् ७२००००० योजनदूरे वर्तते । एवं च उदितोऽपि सूर्यः २२ विनाडिकानामुपरम एवास्माभिर्दृश्यते, तथैवास्तमयानन्तरमपि तावतीर्विघटीरस्माभिर्दृश्यत एव । प्रत्यक्षीकृतश्चायमर्थः सूर्यग्रहणकालेषु गणितानुमितस्पर्शकालस्य प्रत्यक्षदृष्टस्पर्शकालस्य च सूर्योपरागेषूक्तरूपमन्तरं अनुभवसाक्षात्कृतमेव । अत्र च भूसूर्ययोर्विप्रकर्षतारतम्यात् रविमण्डलात् प्रस्थितः किरणः २२ विघटिकाभिरेव भुवं स्पृशतीति प्रतिपादितं हि । अथ नक्षत्रकिरणानां कथा का? नेदिष्ठस्य नक्षत्रस्य किरणः स्वाधिष्ठानगोलात् प्रस्खलन् चतुरः परिवत्सरान् पूर्वोक्तेन जवेन चलित्वैव भुवमासीदति । दूरवर्तिनां नक्षत्राणां किरणास्तु शतं, सहस्रं, कोटिं, परार्धमनन्तान् वा वत्सरानतीत्यैव भुवि पतन्ति ।

अहो! किमिदमाश्चर्यम्! उक्तविधया यैरद्यनक्तमस्मद्दृष्टिप्रविष्टैर्वयं कृत्तिकां, रोहिणीं, श्रवणं, श्रविष्ठां वा पश्यामस्ते किरणाः शतात् सहस्राद्वा वत्सरेभ्यः प्राक् तत्तन्नक्षत्रगोलेभ्यः प्रस्थिताः किल । किरणश्च विनाडिकयैकया पूर्वोक्तमतिदीर्घमध्वानमतिक्रामति । कीदृशी तर्हि भुव उक्तनक्षत्राणाञ्च विप्रकर्षगणना? एवंविधस्थलेषु योजनैरध्वमानं कीदृशं स्यात्? नियतं तत् तिलप्रस्थे तिलबीजानां परिसंख्यानादपि परिहासयोग्यं भवेत् । अहह! मुहुश्चर्व्यमाणे विस्मयोऽस्माकं मानसे नैव माति कथञ्चिदपि । किमिदं यदि कृतयुगादौ नलेन विवाहकाले दमयन्त्यै दर्शिताया अरुन्धतीतारायास्तत्कालप्रसृताः किरणास्ततः प्रभृति महता वेगेन भुवमवतरन्तश्चिरायाद्य मम युष्माकं वा नयनं प्रविशन्तीति । एवं वर्षता मेघेन विसृष्टा जलबिन्दवो यथा कदाचिद्भुवि निरन्तरं न पतन्ति तथा केषाञ्चिन्नक्षत्राणां रश्मयो बिन्दुमात्रपरिणाहां भुवं न स्पृशन्त्येवेत्येतदपि सम्भाव्यमेव । किञ्च किरणद्वारेणैव पदार्थाश्चाक्षुषप्रत्यक्षस्य विषयीभवन्ति । स च किरणो नक्षत्राणां विषये महता कालेनैव स्वाधिष्ठानात् प्रचलन्नस्मन्नयनेन्द्रियं प्राप्नोति । यस्य किरणस्य विश्लेषक्षणे वस्तुनो रूपं यादृशमासीत् तादृशमेव तस्य किरणस्य ग्रहणेन वस्तुनो रूपं नेत्रेन्द्रियमस्मान् बोधयति । अतो नक्षत्राणां रूपं यदद्यास्माभिरवलोक्यते तन्नैतत्क्षणभवम् । किन्तु वत्सरेभ्यः प्राग्यदा प्रकृतः किरणः स्वस्थानान्नक्षत्रशरीरात् प्रससार तत्कालभवम् । अतो येन केनापि महता कारणेन घटमानेनोत्सन्नमपि नक्षत्रं वत्सरपरिमितात् कालात् परमेवास्माकमदृश्यतां प्राप्नुयात् । परेतायामपि गवि तत्क्षीरकल्तितस्य दध्नोऽम्लगुणो नापेयादिति लोकोक्तिवन्नष्टमपि नक्षत्रं चिरमस्माभिर्दृश्येतैव प्राक्प्रसृतैः किरणैः । एवमेवाद्य श्वो वा किमपि नवं नक्षत्रं उत्पन्नं यदि तदपि चिरकालानन्तरमेवास्माकं दर्शनविषयः स्यात् ।

अतिदूरवर्तिनो नक्षत्रादपि अतिदूरे छायापथस्य स्थितिः । छायापथो नाम आकाशे प्रकाशमानो व्यक्तिविवेचनशून्यस्तेजःपुञ्जः । यथोपमितं श्रीकालिदासेन—

वैदेहि! पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम् ॥'

अस्य स्वरूपं नाद्यापि सम्यङ्निर्णीतम् । तथापि वस्तुतो नक्षत्रराशिरेवायं स्यादित्यनुमितम् । विप्रकर्षातिरेकाच्छायापथघटकानां नक्षत्राणां व्यक्तयो नास्मद्दृष्टिभिर्विवेचयितुं शक्यन्त इत्येव । एषां नक्षत्राणां विप्रकर्षं उक्तरीत्या परिच्छेत्तुं न वयं प्रभवामः । यतस्तन्मण्डलात् प्रसृताः किरणाश्चतुर्युगपरार्द्धैरपि भुवं न स्पृशन्ति । एवं स्थिते जगतः सृष्टिकालः, तस्यावयवभूतानां गोलानां संख्या, तेषामाभोगो वा केवलमवाङ्मनसगोचर इत्येव वक्तव्यं वर्तते ।

अथ प्रकारान्तरेण यतामहे ब्रह्माण्डमानमनुभवगोचरीकर्तुम् । भूसूर्ययोर्विप्रकर्षमेवाध्वमाने रूपं परिकल्प्य व्यवहरामस्तावत् । स

च विप्रकर्षः १२००००० योजनमित इत्युक्तमेव । तावानध्वा एको ब्रह्मांगुल इत्यस्तु । तदा भूसूर्ययोरन्तरमेकांगुलमितम् । एतदानुरूप्येण यदि गोलपिण्डमानमपि गण्यते तर्हि सूर्यमण्डलं क्रीडाकन्दुकतुल्यपरिमाणं स्यात् । भूमिस्तु तादृशस्य सूर्यस्य सन्निधौ विन्दुमात्रा स्याद्वा न वेति सन्देह एव । भूसूर्यमध्यपातिनौ बुधशुक्रावनया रीत्या एकस्यांगुलस्य कयापि कलयाऽन्तरितौ स्याताम् गुरुरंगुलानां पञ्चकेन, शनैश्चरो दशकेनारुण एकोनविंशत्या नप्तर्नास्त्रिंशता चान्तरितः स्यात् । एवञ्च ग्रहचक्रमुक्तमानरीत्या हस्तचतुष्टयमितव्यासं किमपि वलयं स्यात् ।

अथ मानेऽस्मिन्नक्षत्राणां दूरव्यवस्था कीदृगिति चिन्तायां नेदिष्ठनक्षत्रं सार्धक्रोशत्रयविप्रकृष्टमित्यायाति । तस्मिन्नन्तराले न किमपि ज्योतिर्वर्तते । किन्तूल्काः परं कदाचित्तत इतः परिभ्रमन्त्य उपलभ्येरन । धूमकेतवो वा एकस्माद्गोलयूथादपरं गोलयूथं संक्रामन्तो मध्ये दृश्येरन् । निर्वाणोष्माणस्सूर्या वा शान्तभ्रमणाः क्वापि कोणे लक्षिताश्छिन्नपक्षा इव पक्षिणस्तूष्णीमवतिष्ठेरन् ।

तदेषा ब्रह्माण्डपरिणाहविज्ञानस्य दिगुपदर्शिता । एवं विधं ब्रह्माण्डस्य वास्तवं तत्त्वं लेशतोऽपि न वयं विवरीतुं शक्नुमः । किञ्चित् स्मर्यमाणमपि तदस्मान् विस्मयमहार्णवे मज्जयति । तस्यैतस्य ब्रह्माण्डस्याधिष्ठात्र्याश्चिच्छक्तेः के वयं महिमानं मनसापि चिन्तयितुम् ।

R. Raja raja Varma.

॥ श्रीरस्तु ॥

श्रीमदभिनवभरताचार्यवाग्गेयकारतोदरमल्ल-
तिम्मामात्यनन्दन-
रामामात्येन निर्मितः

# ॥ स्वरमेळकलानिधिः ॥

श्रीनवसालनाम्नि राज्ये मुद्राधिकारे नियुक्तेन
संस्कृतविद्यानैपुण्योपात्त येम्. ये. विरुदविराजमानेन
एस्. नारायणस्वामिशर्मणा
संशोधितः ।

RAMAMATYA'S

# SVARAMELAKALANIDHI,

(A work on Music)

EDITED BY

S. Narayanaswami Aiyar, M. A.,
of the Pudukkottai State Service.

*Svaramelakalânidhi* seems to have been once a popular book. Manuscript copies of the work have been preserved in many libraries of books on Music in several parts of India; but as these are not easily available to the public, the book has been printed so as to make it accessible to all.

Râmâmâtya, the author of the book, was a Niyogi Brahmin of the Todaramalla family, which was once well-known in and about Rajamundri, but is said to be now extinct. His father was one Timmâmâtyâ, of whom very little is known. Râmâmâtya seems to have been a distinguished musician and composer (*vâggeyakâra*) and earned by his proficiency in the science and art of Music the title of *Abhinava Bharatâchârya* or 'the modern Bharata.' Among his musical compositions are mentioned 'Râgakadambakam', of which the several portions are to be composed in different *râgas*; 'Panchatâlesvaram' of which the different partsare to be adapted tothe once prevalent five original * *tálas*; *Svarânkam*, *Mátrikâ*, *Srírangam*, *Srívilâsam*, &c, for the composition of which *prabandhas* elaborate rules are laid n in *Sangîtaratnâkara*, the standard treatise on Hindu c. Râmâmâtya lived in the sixteenth century and was inister of Râma Râja, the ill-fated king of Vijianagar that s defeated and slain in 1565 at Talikota. The minister was d in great respect by the king, from whom he received the ant of a large estate on the Coromandel Coast and a fort in he principality of Koudavîdu (near Guntur) that was then subect to Vijianagar. None of the works mentioned above seem to ave been preserved anywhere.

From the colophon † at the end of the book, it will be found that the book was completed in the *Srâvana* month of

* These five talas are said to have proceeded from the five faces of Sankara

† शाकेनाभ्रधराधराब्धिधरणीगण्येऽथ साधारणे
वर्षे श्रावणमासि निर्मलतरे पक्षे दशम्यां तिथौ ।
रामामात्यविनिर्मितस्स्वरततेर्निर्मथ्य रत्नाकरं
सोऽयं मेलकलानिधिर्मतिमतामाकल्पमाकल्पताम् ॥

Saka 1472—*i. e.*, in August—September of 1550 A.D. The circumstances in which the book was composed are referred to in the prefatory portion of the book. While Râma Râjâ, king of Vijianagar was, with his brothers Timma Râjâ and Venkatadri Râjâ, listening to the sweet discourse of Râmâmâtya's music, Venkâtadri Raja referred to the conflicting views that then prevailed with reference to the many questions connected with the science and art of Music, and requested Râmâmâtya to compose a work reconciling the differences. The request was supported by the king Ráma Râjâ, who knew of no better person for undertaking the work, as he thought that, while others knew only the theoretical or the practical side of the subject, Râmâmâtya was an expert in both. The minister-musician felt that he was bound to respect the wishes of the king from whom he had received many favours and set about to compose a simple faultless work based on the *Sangítaratnákara*.

The book, which from this account may be taken to be flawless, came in for very severe criticism from Venkatamakhi, (son of Govinda Dikshitar, a minister of a Naik king of Tanjore) who, in his *Chaturdandiprakâsika*, has written that, for the incalculable mischief that Râmâmâtya caused by his wrong c[lassi]fication of *melas*, he could not escape punishment in the [other] world, even though he might go to Râmesvaram and hav[e a] purificatory bath there.

The book is divided into five portions as shewn below :—

(1) The prefatory portion, in which the author give[s] an account of the circumstances in which he wrot[e] the book and of the plan on which the work wa[s] composed.

(2) The *Svara* portion, containing with other matter an account of the *Srutis* and *Svarams*.

(3) The *Vina* portion, in which four kinds of the *Vina* instruments are described.

(4) The *Mela* portion, in which it is shewn that the *rágas* can be divided into twenty (or fifteen) classes



(5) The *Rága* portion, in which the peculiarities of many *Rágas* or tunes are pointed out.

The manuscripts on which this printed book is based are those of the *Svaramelakalânidhi* in :—

A. The Madras Oriental Manuscripts Library.

B. The Tanjore Palace Sarasvatimahâl Library, (For a portion).

C. The Library of Brahma Sri Subbaráma Dikshitar, a musician and composer of the Ettayapuram Samastânam.

Of manuscripts A and B, copies were got through Mr. P. Varadâchâryar, B. A., Head Munshi, Oriental Mss. Library, Madras and Mr. T. S. Kuppuswâmi Sâstriyar, Teacher, Training School, Tanjore respectively, and the manuscript C was sent to me directly by its owner. I have to thank these three gentlemen for their kindness, as also my esteemed brother, Mr. S. Radhákrishna Aiyar, B. A., Principal, Maharaja's College, Pudukkottai, for several valuable suggestions that I have received from him, [a]nd Brahma Srî Radhâkrishna Sâstriyar, Teacher of Sanskrit [Li]terature and Rhetoric, Sanskrit Pâthasâla, Pudukkottai, [fo]r his kindness in reading the proofs.

*11th April, 1906.*
PUDUKKOTTAI

THE EDITOR.

॥ श्रीरस्तु ॥

# ॥ स्वरमेळकलानिधौ ॥

## उपोद्घातप्रकरणं ( पूर्वभागः ) ।

श्रीरङ्गैकनिधिर्गभीरललिताकारस्स्वराप्तिश्रुति-
ग्रामोदारपदैकतानविलसद्भक्तिप्रवीणावृतः ।
श्रीरङ्गप्रणयीसनातनसमुत्तालाभिरामक्रियो
नादब्रह्ममयः प्रसाधितवपुर्नारायणस्त्रायताम् ॥ १ ॥

पुरा पुराणो मुनिराविरासीत् मुरारिनाभीनळिनान्तराळात् ।
सङ्गीतसारः किल सामवेदात् वेदान्तशास्त्रादिव तत्वबोधः ॥
अस्मादभूदत्रिरमुष्य नेत्रात् अमर्त्यबन्धुर्विधुराविरासीत् ।
यत्पादसङ्गादखिलाश्च गङ्गानद्योभरः सद्मकृते पयोधेः ॥ ३ ॥
अक्षीभवन्कुक्षिभवो मुरारेर्ददर्श यत्कारणकाव्यसाम्राज्यम् ।
कलानिधिर्योऽनवगीतरत्नाकरं च पुष्णाति कनत्प्रवाळम् ॥ ४ ॥
ततो बुधोऽभूत्तनयोऽस्य तस्मात् पुरूरवाः पुण्यकृदायुरस्मात् ।
ततो बुधोऽभूत्तनयोऽस्य तस्मात् ... वंशे बभूवुर्भरतादयोऽन्ये ॥ ५ ॥धध
ययातितातो नहुषोऽपि तस्य वंशे बभूवुर्भरतादयोऽन्ये ः ।
एषां कुलालंकृतिरेष जज्ञे श्रीरङ्गनाथो जितराजराजः ।
तया सदाचारदृशा विविन्ते राजर्षिभावं रमितक्षमो यः ॥ ६ ऐ-
तिम्माम्बिका तस्य बभूव देवी साध्वीजनानामिव या समष्टिः ॥पि
सती यशोदा विनताऽनसूया सुदक्षिणा सत्यवती सुभद्रा ॥ ७ ॥
तपोविशेषेण तयोरशेषराजाधिराजोऽजनि रामराजः ।
कन्याप्रदोऽस्मै स हि कृष्णरायः कन्यापितृत्वं बहुमन्यते स्म ॥
भुजो यदीयो भुजगेन्द्रजेता भुवं बिभर्तीति न विस्मयाय ।
चेतोऽणुमात्रं जगदेकधुर्यं शेषाचलेशं वहतीति चित्रम् ॥ ९ ॥
यः खड्गैकसखस्सहानुजयुगो निर्गत्य विद्यापुरात्
लब्ध्वा गुत्तिगिरौ सदाशिवमहीपालं निरालम्बनम् ।
स्वामिद्रोहकृतः प्रतीपनृपतीन्निर्जित्य भद्रासने
कर्णाटे भगवानिव ध्रुवमयं कीर्त्या सहास्थापयत् ॥ १० ॥



दधीचिराधेयशिबिक्षितीशं जीमूतवाहादिमजीवनाङ्कैः ।
अवाप्तमूर्तैरिह येन कीर्तेर्भाति प्रणीतं भुवि वल्लभत्वम् ॥ ११ ॥
तस्यानुजौ विश्रुततिम्मराज श्रीवेङ्कटाद्रिक्षितिपावभूताम् ।
अजातशत्रोरभिजातवृत्तेः भीमार्जुनौ भीमभुजाविवार्यौ ॥ १२ ॥
अमुक्तपार्श्वद्वितयोऽनुजाभ्यां रामावतारो भुवि रामराजः ।
दिवानिशं दीव्यति शीतभानुदिवाकराभ्यामिव रत्नसानुः ॥ १३ ॥
विजित्य सर्वानपि पारशीकान् रणेषु तत्कीर्तिपटच्चराणि ।
आधूय भूयो हरितो वधूटीः विशोभयत्येष यशोदुकूलैः ॥ १४ ॥
श्रीरामयामात्यवरेण रत्नकूटाभिधं कारितमेष सौधम् ।
आलोकयन्निर्जितवैजयन्तं हर्षाङ्कुरो विस्मितमानसोऽभूत् ॥ १५ ॥
अनेकतेजोनिधिराजहंससमाकुलं नित्यमनन्तजिष्णुम् ।
नानासुधर्मावळिनर्मवासमन्यं सुमेरुं समुदाहरन्ति ॥ १६ ॥
मन्दानिलाकम्पितवैजयन्ती मन्दारशाखाव्यतिघट्टनेन ।
आरामलक्ष्म्या मरुतां तनोति हल्लीसलीलामिव यस्य लक्ष्मीः ॥
पर्वेन्दुबिम्बोपलसीम्नि पादमारोप्य यस्मिन्नधिवासवत्यः ।
पाञ्चालिकानां मिथुनानि कन्याः पाणिग्रहं प्रापयितुं यतन्ते ॥
सौधान्तरेऽस्मिन् कुरुते प्रमोदात् स रामराजस्समयापनोदम् ।
सङ्गीतसाहित्यकलाविशेषशेषावतारैर्विबुधैरुपेतः ॥ १९ ॥

सैलारागकदम्बमातृकलसद्व्यप्रबन्धादिम-
द्वात्रिंशद्रसूदकानधिगतश्रीपञ्चतालेश्वरान् ।
श्रीरङ्गद्विपदस्वराङ्कसहितान्सश्रीविलासादिकान्
त्रिंशद्वासरविप्रकीर्णकमहानर्घप्रबन्धादिमान् ॥ २० ॥

चेतोरञ्जनषोडशध्रुवमुखानेकार्थगम्भीरषट्-
चत्वारिंशदुदारसालकमहागूढप्रबन्धान्वितान् ।
अन्यान्विंशतिरागविश्रुततमश्रीपञ्चरत्नस्फुर-
द्गीतालंकृतसाक्षराक्षपनपर्यायैरुपेतानपि ॥ २१ ॥

स वैणिकैस्संसदि गीयमानान् समञ्जसश्रावककण्ठनादैः ।
श्रीरामयामात्यकृतप्रबन्धान् आकर्ण्य कर्णाभरणान्यनन्दत् ॥ २२ ॥

अत्रान्तरे संसदि रामराजं सङ्गीतसाहित्यविनोदभाजम् ।
वेलानुरूपं विनयादवादीत् श्रीवेङ्कटाद्रिक्षितिपालसिंहः ॥ २३ ॥
सङ्गीतशास्त्रे बहुधा विरोधास्सन्त्येव लक्ष्येषु च लक्षणेषु ।
सर्वं समीकृत्य स राममन्त्री तनोतु शास्त्रं वचसा तवेति ॥२४॥
अथासनस्यान्तिकभाजमेनं अधीतसङ्गीतकलारहस्यम् ।
श्रीरामयामात्यमिदं बभाषे श्रीरङ्गराजाधिपरामराजः ॥ २५ ॥
विजानते लक्षणमात्रमेके विदन्ति लक्ष्यं कतिचिज्जगत्याम् ।
सल्लक्ष्यलक्ष्मोभयसारवेदी सन्दृश्यते नैव भवानिवान्यः ॥२६॥
विद्यानिधिः कल्लुपदेशिकस्ते मातामहो दत्तिलवन्महीयान् ।
गान्धर्वशास्त्रेषु ततोऽपि तानि तत्सम्प्रदायेन तव स्फुरन्ति ॥
सङ्गीतशास्त्रेषु मतान्तराणि सन्त्येषु सारांशमुपाददानः ।
संगृह्य सल्लक्षणलक्ष्ययुक्तं सङ्गीतशास्त्रं सरसं विधेहि ॥ २८ ॥
मतानुवृत्त्या भरतादिमानां स्वरप्रमाणं सुलभं कुरुष्व ।
पतञ्जलिः पाणिनिशास्त्रदृष्ट्या शब्दव्यवस्थां कृतवान्यथादौ ॥
हृत्पूरितानन्दमिति ब्रुवाणः कर्पूरवीटीमददादमुष्मै ।
आदाय तामारचितानुमोदः विचारयामास स राममन्त्री ॥३१॥
स एव सर्वाधिककोण्डवीट प्रधानदुर्गप्रतिपादनेन ।
पूर्वार्णवेनैव परीतमूर्तेर्विभुत्वमुर्व्या वितताार मह्यम् ॥ ३१ ॥
अस्य प्रसादादमिताग्रहारप्रतिष्ठयाऽनेकमहीसुराणाम् ।
आलम्बनं तत्र विधाय तेषां अनुग्रहादाप विशालकीर्तिम् ॥
जेल्लूरिसिह्मासनपट्टणेन युक्तां सरत्नामिव हारवल्लीम् ।
वितीर्य मे सश्रमवातिराश्मेरधीशतामस्य तुलामतानीत् ॥ ३३ ॥
प्रयच्छति प्रत्यहमत्युदारां सम्माननां सादरमेष मह्यम् ।
सन्नं जगत्यामुपकर्तुकामः स राजभूरस्य पटुर्मुदेहम् ॥ ३४ ॥

आचिराद्विरचय्याहं स्वरमेळकलानिधिम् ।
तमस्मै चोपदीकृत्य गम्यासं कृतकृत्यताम् ॥
सोऽहं सङ्गीतसाहित्यलक्ष्मीदक्षिणनायकः ।
इत्थं विचिन्त्य तं राममन्त्री वक्तुं प्रचक्रमे ॥

---

## ॥ स्वरमेळकळानिधिः ॥

( पूर्वप्रकाशितात्परम् )

यथा व्यक्तस्तथा तन्त्र्यां च्युतपञ्चममध्यमः ।
अथापराभिस्तिसृभिः तन्त्रीभिर्येस्वराः क्रमात् ॥
एतासु षट्सु सारीषु जायन्ते तान् प्रचक्ष्महे ।
पञ्चमेनानुमन्द्रेण युक्ततन्त्र्या द्वितीयया ॥
शुद्धस्याद्धैवतः शुद्धो निषादश्च ततःपरम् ।
कैशिकाख्यनिषादोथ च्युतषड्ज निषादकः ॥
शुद्धषड्जस्ततश्शुद्धऋषभष्षट् स्वराअमी ।
पूर्वक्षिप्तासु सारीषु षट्सु जाता यथाक्रमम् ॥
द्वितीययानयातन्त्र्या जातौ षड्जर्षभावुभौ ।
शुद्धौमन्द्रौ प्रजायेते पुनस्तन्त्र्या तृतीयया ॥
तस्मात् प्रयोगेन ग्राह्यौ जातौ तन्त्र्या द्वितीयया ।
अनुमन्द्रस्वराः प्रोक्ता वक्ष्ये मन्द्रस्वरानथ ॥
तृतीयया मन्द्रषड्ज तन्त्र्यास्युरनुमन्द्रवत् ।
पूर्वासु षट्सु सारीषु क्रमाच्छुद्धर्षभस्तथा ॥
शुद्धगान्धारकस्साधारणगान्धारकस्तथा ।
च्युतमध्यमगान्धारश्शुद्धमध्यमसंज्ञकः ॥
अनन्तरस्वरः प्रोक्तश्च्युतपञ्चममध्यमः ।
तृतीयतन्त्र्याजातोपि प्रयोगेनैव गृह्यते ॥
जायेते तौ पुनस्तन्त्र्या चतुर्थ्याथस्वरौयतः ।
मन्द्रमध्यमतन्त्र्यातु चतुर्थ्यास्युरमीस्वराः ॥
पूर्वासु षट्सुसारीषु च्युतपञ्चममध्यमः ।
शुद्धपञ्चम नामा च ह्युत्तरं शुद्धधैवतः ॥
ततश्शुद्धनिषादाख्य कैशिक्याख्यनिषादकः ।
च्युतषड्जनिषादाख्य एते शुद्धस्वराः कृताः ॥

ध्वनेरल्पविशेषेण केचिल्लक्ष्यैकतत्पराः ॥
एतदेवाभिसन्धाय कथितं शार्ङ्गसूरिणा ।
अल्पप्रयोगस्सर्वत्र काकलीचान्तरस्वरः ॥
लक्षिता शुद्धमेळाख्यवीणालक्ष्यविदां मतम् ।

इति शुद्धमेळः ।

अथोच्यते मध्यमेळवीणाया लक्षणं स्फुटम् ।
अत्रैव शुद्धमेळाख्यवीणायामुपरिस्थिता ॥
आद्यतन्त्र्यनुमन्द्राख्यपञ्चमेनयुतायदा ।
द्वितीया मन्द्रषड्जेन तन्त्रिका संयुता यदि ॥
मन्द्रपञ्चमसंयुक्ता तृतीया तन्त्रिका यदि ।
तृतीया मन्द्रषड्जेन तन्त्रिका चेत् समन्विता ॥
तथा भवेत् मध्यमेळवीणा पार्श्वे त्रितन्त्रिका ।
उपरिस्थत्रितन्त्रीभिस्समानश्रुतिका यदि ॥

इति मध्यमेळवीणा ।

तदन्याच्युततन्त्रीषु मध्यपञ्चमतन्त्रिका ।
स्यादच्युत महारायमेळवीणा मयोदिता ॥

इति श्रीमदभिनवभरताचार्यवाग्गेयकारतोदरमल्लतिम्मामात्यनन्दन
रामामात्यनिर्मिते स्वरमेळकलानिधौ वीणाप्रकरणं तृतीयम् ॥

---

एवं प्रपञ्चितं लक्ष्म वीणानां तिसृणामपि ।
अनन्तरं प्रवक्ष्यामि रागमेळान्यथाक्रमम् ॥
देशभाषाप्रसिद्धेन रागनाम्नाविशेषितान् ।
तत्तद्रागप्रधानत्वान्मेळान् वक्ष्येक्रमादिमान् ॥
लक्षणं लक्ष्यते पश्चादुद्देशः क्रियतेऽधुना ।
सर्वेषु रागमेळेषु मुखारी मेळ आदिमः ॥
ततो माळवरागस्य मेळश्श्रीरागमेळकः ।



सारङ्गनाटमेळश्च मेळोहिन्दोळकस्य च ॥
शुद्धरामक्रियामेळो देशाक्षी मेळकोऽपरः ।
मेळः कन्नडगौळस्य शुद्धनाट्याश्च मेळकः ॥
आहरीमेळकश्चैव नामरामक्रियापरः ।
मेळश्शुद्धवराळ्याश्च रीतिगौळस्य मेळकः ॥
वसन्तभैरवीमेळसंज्ञकस्तु प्रकीर्तितः ।
केदारगौळमेळश्च हेजुज्जी मेळकस्ततः ॥
मेळस्सामवराळ्याश्च रेवगुप्तेश्चमेळकः ।
सामन्तनाममेळश्च काम्भोजीमेळकस्ततः ॥
मेळाविंशतिरेवैते तेषां लक्षणमुच्यते ।
शुद्धसप्तस्वरैर्युक्तो मुखारीमेळको भवेत् ॥
अस्मिन् मेळे मुखारीच ग्रामरागाश्च केचन ।
सम्मतश्शुद्ध इत्येष शार्ङ्गदेवविपश्चितः ॥

इति मुखारिमेळः ।

शुद्धास्सरिमपाश्शुद्धधैवतश्च ततःपरम् ।
च्युतमध्यमगान्धारश्च्युतषड्जनिषादकः ॥
एतैस्सप्तस्वरैर्युक्तस्सम्मतोरागवेदिनाम् ।
मेळो माळवगौळस्य रामामात्येन लक्षितः ॥
अस्मिन् मेळे सम्भवन्ति ये रागास्तानथ ब्रुवे ।
रागो माळवगौळाख्यो ललितोभौळकस्तथा ॥
सौराष्ट्री घूर्जरीमेचभौळीच फलमञ्जरी ।
गुण्डक्रिस्सिन्धुरामक्रिच्छायागौळः कुरञ्ज्यापि ॥
रागः कन्नटवङ्गाळः तथा मङ्गळकैशिकः ।
रागो मलहरीत्यादि रागाः केचित् भवन्त्यतः ॥

इति माळवरागमेळः ।

शुद्धषड्जोऽथपञ्चश्रुत्यृषभश्च तथापरः ।
स्यात्साधारणगान्धारश्शुद्धौपञ्चममध्यमौ ॥
पञ्चश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ।
एतैस्सप्तस्वरैर्युक्तश्श्रीरागस्य च मेळकः ॥
अस्मिन् मेळे सम्भवन्ति येरागास्तानथ ब्रुवे ।
श्रीरागो भैरवी गौळी धन्यासी शुद्धभैरवी ॥
वेळावळी माळवश्रीः शङ्कराभरणोऽपि च ।
आन्दोळी देवगान्धारी मध्यमादिस्तथापरा ॥
एवमाद्याश्च कतिचिद्रागा मेळात् भवन्त्यतः ।
इति श्रीरागमेळः ।

पञ्चश्रुतृचषभश्शुद्धषड्जमध्मपञ्चमाः ।
पञ्चश्रुतिधैवतश्च च्युतषड्जनिषादकः ॥
च्युतमध्यमगान्धारः एतैस्ससप्तस्वरैर्युतः ।
सारङ्गनाटमेळोयं रामामात्येन लक्षितः ॥
एतन्मेळकसम्भूतान् रागान् वक्ष्यामि कांश्चन ।
सारङ्गनाटसावेरी तथासारङ्गभैरवी ॥
नटनारायणी शुद्धवसन्तः पूर्वगौळकः ।
स्यात् कुन्तळवराळी च भिन्नषड्ज स्तथैव च ॥
नारायणीत्येवमाद्याः केचिद्रागा भवन्त्यतः ।
इति सारङ्गनाटमेळः ।

श्रीरागमेळे यल्लक्ष्म तत् स्याद्धिन्दोळमेळके ।
धैवतश्शुद्ध एवात्र विशेषोऽयं प्रदर्शितः ॥
कांश्चित् तत्रोद्भवान् रागान् वक्ष्ये लक्षणसङ्गतान् ।
हिन्दोळो मार्गहिन्दोळो भूपालादिपिरित्यमी ॥
अन्ये च कतिचिद्रागास्सम्भवन्त्यत्र मेळके ।
इति हिन्दोळमेळकः ।



शुद्धस्सरिपधाश्चैव च्युतमध्यमपञ्चमः ।
च्युतमध्यमगान्धारः च्युतषड्जनिषादकः ॥
शुद्धरामक्रियामेळस्स्यादेभिस्सप्तभिस्स्वरैः ।
अत्रमेळे सम्भवन्ति येरागारतानथ ब्रुवे ॥
शुद्धरामक्रिया पाळिरार्द्रदेशीच दीपकः ।
इत्याद्यास्सम्भवन्त्यत्र मेळे रागाश्च केचन ॥
इति शुद्धरामक्रियामेळः ।

षट्छ्रुत्यृषभकश्शुद्धषड्जमध्यमपञ्चमाः ।
पञ्चश्रुतिर्धैवतश्च च्युतषड्जनिषादकः ॥
च्युतमध्यमगान्धारश्चेत्येतत्स्वरसंयुतः ।
देशाक्षीमेळकः प्रोक्तो रामामात्येन धीमता ॥
देशाक्षिप्रमुखा रागा भवन्त्यत्र क्वचित् क्वचित् ॥
इति देशाक्षिमेळः ।

देशाक्षीरागमेळस्य लक्षणं यदुदाहृतम् ।
मेळे कन्नडगौळस्य तस्मात् भेदोस्ति कश्चन ॥
कैशिक्याख्य निषादोऽत्र प्रयोज्यो लक्ष्यवेदिभिः ।
अस्मिंस्तु मेळे सञ्जातान् रागान् कति च न ब्रुवे ॥
एकः कन्नडगौळाख्यस्तथा घण्टारवोऽपि च ।
शुद्धवङ्गाळनामा च छायानाटस्ततःपरः ॥
तथातु रुप्कतोडी च नागध्वनिरतः परः ।
देवक्रियेत्येवमाद्या रागाः केचित् भवन्त्यतः ॥
इति कन्नडगौळमेळः ।

शुद्धस्वरास्तुसमपाष्षट्छ्रुतृचषभधैवतौ ।
च्युतमध्यमगान्धारश्च्युतषड्जनिषादकः ॥
स्विररंमाभस्सयुक्तश्शुद्धैनाट्याश्च मेळकः ।
शुद्धनाटीप्रभृतयो रागा अत्र भवन्ति च ॥
इति शुद्धनाटीमेळः ।

शुद्धास्समपधाश्चैव पञ्चश्रुत्यृषभस्तथा ।
साधारणोऽपि गान्धारश्च्युतषड्जनिषादकः ॥
स्वरैरमीभिस्संयुक्त आहरीमेळको भवेत् ।
आहरीप्रमुखा रागा भवेयुरिहमेळके ॥
इत्याहरीमेळः ।
शुद्धास्समपधारिश्च च्युतषड्जनिषादकः ।
साधारणोऽपि गान्धारस्स्वरैरेभिस्समन्वितः ॥
नादरामक्रियामेळस्तस्मिन् रागाश्च केचन ।
नादरामक्रियामुख्यास्सम्भवन्ति कचित् कचित् ॥
इति नादनामक्रियामेळः ।
शुद्धगान्धार इत्येतैरन्वितोयस्स्वरैर्भवेत् ।
मेळश्शुद्धवराळ्याश्च तत्र शुद्धवराळके ॥
अप्येव सम्भविष्यन्ति रागा देशविभेदतः ।
इति शुद्धवराळिमेळः ।
शुद्धास्सरिगमापञ्च पञ्चश्रुतिकधैवतः ।
कैशिक्याख्यनिषाद श्चेत्येतैर्युक्तः स्वैरस्तुयः ॥
सरीतिगौळमेळस्स्याद्रीतिगौळादयोऽत्र च ।
रागाः केचित् भवन्तीति सम्मतं गानवेदिनाम् ।
इति रीतिगौळमेळः ।
च्युतमध्यमगान्धारः कैशिक्याख्यनिषादकः ।
शुद्धास्सरिमपाधश्च स्वरैरेभिस्समन्वितः ॥
वसन्तभैरवीमेळः तस्मिन् रागाश्च केचन ।
वसन्तभैरवीसोमरागप्रभृतयो मताः ॥
इति वसन्तभैरवीमेळः ।
शुद्धाश्च समपाः पञ्चश्रुतीचर्षभधैवतौ ।
च्युतमध्यमगान्धारश्च्युतषड्जनिषादकः ॥



केदारगौळमेळः स्यात् स्वरैरेभिस्समन्वितः ।
तस्मिन् केदारगौळश्च स्यान्नारायणगौळकः ॥
एवमाद्यास्सम्भवन्ति मेळे रागाः कचित् कचित् ।
इति केदारगौळमेळः ।
मेळाः पञ्चश्रुतिप्रोक्ता काकल्यन्तरवर्जिताः ।
काकल्यन्तरसंयुक्तान् पञ्चमेळान् प्रचक्ष्महे ॥
शुद्धौ च षड्जऋषभौ शुद्धाश्च मपधास्तथा ।
गान्धारोऽन्तरसंज्ञश्च काकल्याख्यनिषादकः ॥
एतावत्स्वरसंयुक्तो हिजूजीमेळको भवेत् ।
इत्येष शार्ङ्गदेवस्य सम्मतो मार्गवेदिनः ॥
इति सामवराळमेळः ।
शुद्धास्सरिपमाश्शुद्धनी गान्धारकोऽन्तरः ।
एतैस्ससस्वरैरेवगुप्तिमेळ उदाहृतः ॥
तस्मिन् रागे रेवगुप्तिश्शुद्धरागाश्च केचन ।
रत्नाकरे च मेळानां शार्ङ्गदेवेन लक्षिताः ॥
इति रेवगुप्तिमेळः ।
रिधौषट्श्रुतिकौचैव काकल्यन्तरकौनिगौ ।
शुद्धषड्जमपा एतैस्सम्मितो हि स्वरैर्यदा ॥
तदा सामन्तमेळस्स्यात्तत्र रागास्तदादयः ।
इति सामन्तमेळः ।
गनीचान्तरकाकल्यौ रिधौ पञ्चश्रुती तथा ।
तेषां शुद्धास्तु समपाह्येतैः काम्भोजिमेळकः ॥
काम्भोजिप्रमुखा रागा मेळेस्मिन् सम्भवन्ति हि ।
इति काम्भोजिमेळः ।
लक्षिता विंशतिर्मेळाः गात्रेस्युर्नियता अमी ।
पक्षद्वयन्तु वीणायां वक्ष्यते लक्ष्यसम्मितम् ॥

*

ग्राहत्वन्तरकाकल्यौ स्वररूपे पृथक् पृथक् ।
पक्षोयं प्रथमस्तत्र मेळास्स्युर्विंशतिर्ध्रुवम् ॥
अन्तरस्सच काकल्या ग्राह्याः प्रतिनिधिः क्रमात् ।
च्युतमध्यमगान्धारश्च्युतपड्ज निपादकः ॥
अयं द्वितीयः पक्षोऽत्रमेळाः पञ्चदशस्स्मृताः ।
शेषाः पञ्चदश स्वेषु पञ्चलीनास्तदुच्यते ॥
वसन्तभैरवीमेळे लीनोहीजुज्जिमेळकः ।
अथसामवराळ्याश्च मेळोयं प्रागुदीरितः ॥
अत्र प्रातिनिधेः पक्षे मुखारीमेळपूर्वकः ।
केदारगौळमेळान्ता मेळाः पञ्चदशस्मृताः ॥

इति श्रीमदाभिनवभरताचार्यवाग्गेयकारतोदरमल्लतिम्मामात्य
निर्मितस्वरमेळकळानिधौ मेळप्रकरणं चतुर्थम् ॥

---

एतेषु नाम ते रागा उत्तमा मध्यमा अपि ।
अधमाश्चापि सकलाः कथ्यन्ते ते विवेकतः ॥
मुखारी शुद्धनाटी च तथा माळवरागकः ।
ततश्शुद्धवराळीच गुज्जरी ललितस्तदा ॥
शुद्धरामक्रियाशुद्धवसन्तो भैरवी तथा ।
हिन्दोळरागश्श्रीरागः रागः कन्नडगौळकः ॥
सामन्तरागो देशाक्षी धन्यासी भौळिकेति च ।
आहरीचापि मल्हारी माळवश्रीस्ततः परम् ॥
सारङ्गनाटिरित्येतास्स्यू रागाश्चोत्तमोत्तमाः ।
असङ्कीर्णतमालोके रागाविंशतिरेव च ॥
गीतप्रबन्धकालापठायमोग्या भवन्ति हि ।

इत्युत्तमरागाः ।

केदारगौळः काम्भोजी वङ्गाळः कन्नटाह्वयः ।
मेकाहारिर्मध्यमादिर्नारणी रीतिगौळकः ॥



नादरामक्रियापाडिर्भूपाळीरेवगुप्तिकः ।
गुण्डक्रियाहिजूजीच वसन्तादिश्च भैरवी ॥
रागस्सामवराळिश्चेत्येते पञ्चदशैव च ।
रागप्रबन्ध (घण्टा) हामध्यमाशाल्यकस्तथा ॥

इति मध्यमरागः ।

सौराष्ट्रोमेच बोळी च छायागौळकुरञ्जिकौ ।
सिन्धुरामक्रियागौडी पाडीमङ्गळकैशिकः ॥
पूर्वगौळिस्सोमराग आन्दोळी मन्त्रमञ्जरी ।
शङ्कराभरणं देवगान्धारी दीपकस्तथा ॥
नटनारायणीशुद्धभैरवीभिन्नपड्जकः ।
स्यात् कुन्तळवराळी च रागस्सारङ्गभैरवी ॥
शुद्धवङ्गाळको नागध्वनिर्घण्टारवस्तथा ।
मार्गहिन्दोळकश्छायानाटिरेवक्रियापि च ॥
नारायणीगौळरागौ ततस्तोडीवराळकौ ।
तुरुष्कतोडीरागश्च रागस्सावेरिका तथा ॥
आर्द्रदेशीत्यादयश्च रागास्युरधमाः क्रमात् ॥
सर्वेष्वेतत् पुरोक्तेषु मध्यमेषूत्तमेषु च ।
अन्तर्भूतश्च सङ्कीर्णा पामरभ्रामकाश्च ते ।
ठायातानप्रबन्धानामयोग्याबहुळाश्च ते ॥
तस्मान्नतेपरिग्राह्यारागसङ्गीतकोविदैः ।

इत्यधमरागाः ।

देशिरागश्च सकला पड्जग्रामसमुद्भवाः ।
ग्राहांशन्यासमन्त्रादिपाडवौडवपूर्णकाः ॥
देशित्वात्सर्वरागेषु भवन्ति न भवन्ति च ।
तथापि लक्ष्यमाश्रित्य लक्ष्यज्ञाननुसृत्य च ॥
विंशत्युत्तमरागाणामसङ्कीर्णस्वरूपिणाम् ।

मध्यमानां तथा पञ्चदशानाञ्च ततः परम् ॥
अधमानां च केषां च लक्षणं लक्ष्यतेऽधुना।
संपूर्णस्वरसंयुक्तषड्जन्यासग्रहांशकः॥
योगेयः पश्चिमेयामे नाटिरागस्स उच्यते।
इति नाटिरागः।
षड्जांशासग्रहाषड्जन्यासतां सङ्गता तु या। .........
सर्वयामेषु या गेया सावराळीतिकीर्तिता॥
इति वराळरागः।
सारङ्गनाटी संपूर्णा सन्यासासग्रहापिच।
षड्जांशन्याससंपूर्णो गेयोमाध्यन्दिनात्परम्॥
इति शुद्धरामाक्रियारागः।
सग्रहासांशिकां षड्जन्यासांसंपूर्णतांगता।
मुखारी सर्वसमये गातुं योग्याप्रकीर्तिता॥
इति मुखारीरागः।
संपूर्णा भैरवीरागस्सन्यासस्सांशकोमतः।
षड्जग्रहस्तथागेयो यामे यः पश्चिमे च सः॥
इति भैववीरागः।
सन्यास आहरीरागः सांशषड्जग्रहोपिच।
संपूर्णश्चरमेयामे गातव्योऽसौविचक्षणैः॥
इत्याहरीरागः।
सामन्तरागष्षड्जांशः षड्जन्यासश्च सग्रहः।
दिनस्यचरमेयामे गेयस्संपूर्णतायुतः :
इति सामन्तरागः।
निन्यासांशग्रहोपेतः रागः कन्नडगौळकः।
संपूर्णोपि कदाचित्स्यात् आरोहे त्यक्तमध्यमः॥
गेयोह्यः पश्चिमेयामे (उत्कळाना)मतिप्रियः।
इति कन्नडगौळः।



सन्यासस्सग्रहः पूर्णोदेशाक्षीराग उच्यते।
आरोहेमनिवर्जोसौ पूर्वयामे च गीयते॥
इति देशाक्षी।
इत्युत्तमसंपूर्णदशमध्यमं सग्रहन्यासा।
बौळिकस्स्यात् षाडवी सा चगातव्या दिनस्यादिभागतः॥
इति बौळरागः।
रागश्शुद्धवसन्ताख्य सन्यासस्सग्रहोपिच।
गीयते सर्वयामेषु सर्वदा मङ्गळप्रदा॥ ..........
इति माळमश्रीः।
पवर्जिता रिग्रहांशन्यासाषाडविका(नवत्)।
कदाचिदवरोहे सा युता सा घूर्जरी भवेत्॥
दिनस्य प्रथमे यामे गेया सा गानकोविदैः।
इति घूर्जरी।
सग्रहासन्यासंयुक्ता ललिता पञ्चमोत्थिता।
षाडवी प्रथमे यामे गेया सा शोभनप्रदा॥
इति ललिता।
इत्युत्तमषाडवाः पञ्च।
हिन्दोळकोरिधत्यक्त औडवस्सग्रहांशकः।
सन्यासश्शुभदोगेयः सरागस्सार्वकालिकः॥
इति हिन्दोळः।
धैवतांशग्रहन्यासो रागो माल्हरिसंज्ञकः।
औडवो गनिवर्जोसौ प्रभाते गीयते बुधैः॥
इति मल्हरी।
रागो धन्याससंज्ञोयो बहुशो रिधवर्जितः।
गेयः प्रातरसौ तज्ज्ञैः सर्वासांशग्रहौडवः॥
इति धन्यासी।

रागो माळवगौळश्च निन्यासोंशग्रहो मतः ।
औडवो रिपवर्जश्च कदाचिद्रिपसंयुतः ॥
गेयस्सायाह्नसमयो रागानामुत्तमोत्तमः ।
इति माळवगौळः ।
श्रीरागस्सग्रहस्सांशस्सन्यासोगधवर्जितः ।
औडवोपि भवेद्रागः कदाचित गधसंयुतः ॥
सायाह्ने गीयतामेषस्सर्वसंपत्प्रदायकः ।
इति श्रीरागः ।

इत्युक्तमौडवाः पञ्च ।
केदारगौडस्संपूर्णो निन्यासो रिग्रहोपिच ।
निषादांशश्चतुर्थेह्नि प्रहरे गीयते बुधैः ॥
इति केदारगौळः ।
नादरामक्रियारागो षड्जन्यासस्तुसग्रहः ।
षड्जांशस्तु संपूर्णो गेयो यामे तुरीयके ॥
इति नामक्रिया ।
सन्यासा सग्रहा सांशस्संपूर्णापि क्वचिद्भवेत् ।
आरोहे मनिवर्जासौ काम्भोजी सायमीरिता ॥
इति काम्भोजी ।
षड्जांशा सग्रहापड्जन्यासा सामवराळिका ।
संपूर्णा सर्वदा गेया सामवेदसमुद्भवा ॥
इति सामवराळी ।
रीतिगौळोनिषादांशोनिन्यासग्रह एव च ।
संपूर्णोगीयते सायं मुखारीमेळमाश्रितः ॥
इति रीतिगौळरागः ।
हिजूजिरागसंपूर्णो मन्यासोमग्रहांशकः ।



गेयोह्नि पश्चिमे यामे काकल्यन्तरभूषितः ॥
इति हिजूजिरागः ।
गांशो नारायणीरागो गांधारन्यासकग्रहः ।
संपूर्णा प्रातरुद्गेयावरोहेरिच्युताक्वचित् ॥
इति नारायणी ।
पूर्णो वेलावलीरागो धन्यासस्तु धचग्रहः ।
क्वाचिद्रिसाभ्यांन्यूनः स्यादवरोह सः प्रभातजः ॥
इति वेळावळी ।
इति मध्यमरागेषु संपूर्णोऽष्टौ ।
रागः कन्नडबंगाळो गांधारग्रहगगांशकः ।
गन्यासऋषभन्यूनः प्रातर्गेयस्सषाढवः ॥
इति कन्नडबंगाळः ।
वाळिरागस्तु संन्यास सांशषड्जग्रहस्स्मृतः ।
तुरीययामे गेयोसौ नह्री नष्पाडवोमतः ॥
इति पाळीरागः ।
वसन्तभैरवीरागस्संन्यासः पञ्चमोज्झितः ।
संग्रहष्षड्जकन्यासः प्रातर्गेयस्सषाढवः ॥
इति वसन्तभैरवी ।
सांशो गुंडक्रियारागस्सग्रहन्यासषाढवः ।
धवर्जितः पूर्वयामेगेयो धैवतयुक्क्वचित् ॥
इति गुंडक्रिया ।
इति मध्यमरागेषु षाढवाश्चत्वारः ।
मध्यमादिर्मग्रहांशो मन्याशोरिधवर्जितः ।
औडवा पश्चिमेयामे दीनस्य परिगीयते ॥
इति मध्यमादिरागः ।
भूपाळिरागस्सन्यासस्सांशस्सग्रह एव च ।

मनिलोपादौंडवस्स्यात् प्रातःकाले च गीयते ॥
इति भूपाळी ।
रिग्रहोरेवगुप्तिस्स्याद्रिन्यासोमनिवर्जितः ।
औडवश्चरमेयामे दिवसस्य न गीयते ॥
इति रेवगुप्तिः ।
मध्यमरागेषु औडवरागात्रयः ॥
इति मध्यमरागाः ।
अथाधामनां रागाणां केषांचिल्लक्ष्म कथ्यते ।
सावेरिरागो धन्यासो धांशोधग्रह एव च ॥
औडवस्सपलोपेने प्रगेगेयो विचक्षणैः ॥
इति सावेरिरागः ।
घंटारवो धैवतांशो धग्रहन्यास एव च ।
गलोपात्षाडवः प्रोक्तस्सर्वकाले प्रगीयते ॥
इति घंटारवः ।
रागोनागध्वनिः पूर्णस्सषड्जस्सग्रोपि च ।
षड्जन्यासो गीयतेसौ सर्वदा गीतकोविदैः ॥
इति नागध्वनीः ।
सन्यासस्सग्रहस्सांश रागस्संपूर्ण एव च ।
सोमरागस्सदागेयो मंद्रमध्यमभूषितः ॥
इति सोमरागः ।
पञ्चमांशग्रहन्यास आंदोळीराग ईरितः ।
निगपांशष्पाडवोयं मध्यमादिसमुज्वलः ॥
इत्यांदोळी ।
शंकराभरणोरागस्संपूर्णस्सांशकस्स्मृतः ।
षड्जन्यासग्रहस्सोयं सायन्तश्चायमाश्रितः ॥
इति शंकराभरणः ।
( क्रमशः )

## ॥ स्वरमेळकळानिधिः ॥

( पूर्वप्रकाशितात्परम् । )

---

भिन्नषड्जाख्य रागोयं सग्रहः परिकीर्तितः ।
षड्जन्यासष्षाडवोयं मलोपात् गीयते सदा ॥
एवं प्रकारेणोन्नेया रागाश्शेषा विचक्षणैः ।
अतिसंकीर्णभावेन नास्माभिर्लक्षिताः क्वचित् ॥
इत्यधमरागाः ॥
गानोपयोगिनां त्वेतत् प्रबन्धानांतु लक्षणम् ।
रत्नाकरे शार्ङ्गदेव सूरिणा कथितम् स्फुटम् ॥
गान्धर्वमखिलञ्चापि तत्रैव स्फुटमीरितम् ।
तत एवावगन्तव्यः तस्मान्नकथितं मया ।
शाकेनात्र धराधराब्धिधरणीगण्येयसाधारणे
वर्षे श्रावणमासि निर्मलतरे पक्षे दशम्यां तिथौ ।
रामामात्यविनिर्मितस्स्वरततेस्सङ्गीतरत्नाकरात्
सोयं मेळकळानिधिर्मतिमता माकल्पमाकल्पताम् ॥
॥ इति श्रीमदभिनवभरताचार्यवाग्गेयकारतोदरमल्लतिम्मामात्य-
नन्दन रामामात्यनिर्मिते स्वरमेळकलानिधौ रागप्रकरणम्
पञ्चमं संपूर्णम् ॥

---

॥ श्रीरस्तु ॥

## ॥ प्रसन्नवेङ्कटेश्वरस्तुतिः ॥

अथालमेलुमङ्गाख्यत्रिलोकजननीयुतम् ।
प्रसन्नवेङ्कटेशानं श्रीशिरोऽद्रिनिवासिनम् ॥
स्तवीमिपञ्चविंशत्या श्लोकैर्भक्तिसमान्वितः ।
भगवच्चरणालम्बां परमानन्दपल्लवाम् ॥
चित्तालवालसंरूढां रुचिरांभक्तवल्लरीम् ।
संवर्धयितुकामोऽहं स्तोत्रवारिभिरन्वहम् ॥

श्रीराघवाङ्घ्रि सरसीरुहयुग्ममारा-
न्नत्वाब्रुवे वरदवेङ्कटनाथमीशम् ।
यस्यप्रसादवशगो भवतीहवेगा-
न्मुक्तोऽपिशुम्भनकलामतुलामवाप्तः ॥

कश्चिन्नाम्नाशिरोऽद्रिर्विविधफलभरानम्रभूमीरुहाढ्य-
स्सिद्धद्वंद्वैर्मुनीन्द्रैरपि महिततमैस्सेव्यमानस्समन्तात् ।
इन्धे सर्वर्तुपुष्पोद्गमलसितलताभास्वरश्शैलराज-
स्तत्रत्योवेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ १ ॥

सौमित्रित्यक्तमोहं रचयितुमचिराद्युद्धरङ्गे शयानं
वायोःपुत्रेण पूर्वं नभसिविचरता नीयमानाज्जवेन ।
संजीवन्याख्यगोत्रान्निपतितमवनौ खण्डमाचक्षतेयं
तत्रत्योवेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ २ ॥

श्रीमान् श्रीवेङ्कटाद्रौ कृतवसतिरथागत्य सर्वत्रगच्छन्
यस्याद्रेस्सौकुमार्यं निरुपममनघं वीक्षमाणः कदाचित् ।
अन्तस्सन्तोषभारादिहभुवि बिभरामास शेषाद्रिनाथ-
स्तत्रत्योवेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ३ ॥



दृष्ट्वा शेषाचलेशस्तदतिरुचिरतां सात्विकान् जन्तुवर्गा-
स्तत्रत्यान् श्लाघमानाश्चिरमथकुतुकादेव यस्मिन् विशाले ।
शैलेवस्तुम्मनीषामकुरुतभगवान् लोकमात्रासमेत-
स्तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ४ ॥

यस्य क्षीराब्धिशायी विभवमसदृशं वीक्षमाणस्समन्ता-
दद्रीणां शीर्षभूतोलसति निजरुचापर्वतस्सर्वतोऽयम् ।
तस्मान्नाम्ना शिरोद्रिर्भवतु सगिरिरित्यन्वगृह्णान्मुरारि-
स्तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ५ ॥

लक्ष्मीनाथस्सनाथः कलशजलनिधेः कन्ययामन्ययाऽयं
यस्मिन्नद्रौवतीर्णो विहराति वितरन् वाञ्छितं सेवकेभ्यः ।
संरक्षन् भक्तवर्गानखिल सुमनसामग्रगण्यश्शरण्य-
स्तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ६ ॥

आविर्भूतश्च यस्मिन् वृषशिखरिपतिं मानुषाणामवेद्यं
कुण्डोध्नीधेनुरेनं प्रतिदिवसमपि प्राप्यकाचित्वधस्तात् ।
कृष्णाङ्गीपूर्णभक्त्यासह विमलतरैरभ्यषिञ्चत्पयोभिः
तत्रत्यो वेङ्कटेशोविहरतु हृदये सर्वदा सर्वदायी ॥ ७ ॥

गच्छन्तिं यस्यश्रृङ्गे प्रतिदिनमपिगां गोपातिस्तां कदाचित्
संवीक्ष्यैषा किमर्थं गिरिशिखरतलम् मामिकायाति धेनुः ।
इत्येवं चिन्तयन् सस्वयमुपरिगतो दृष्टवांस्तत्रवृत्तिं
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ८ ॥

ज्ञात्वा तत्रावतीर्णं वरदवृषपतिं सोऽपिगोपोमहात्मा
पश्यन् ध्यायन् नमस्यन्नुतिमपि रचयन्मोदसिन्धौ निमज्जन् ।
आत्मानं नैवजानन् शरणमशरणस्तंययौ यस्यश्रृङ्गे
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ९ ॥

तस्मादागत्य गोपोनिजवसतिमथाहूय सर्वान् स्वकीयान्
व्याहार्षीदेवमस्मानवितु सदा वेङ्कटेशो रमेशः ।
आविर्भूतस्समिन्धे सदयमितिजवाद्वीक्ष्य यस्याग्रसंस्थं
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ १० ॥
सर्वे भक्ताग्रगण्यास्तदनुवृषगिरेर्वल्लभं पद्मनाभम्
भृङ्गेयस्यावतीर्णं धरणिमघपते ज्ञापयाञ्चकुरेते ।
शृण्वन् विज्ञप्तिमेषां क्षितिपतिरचिरादागमत्तं दिदृक्षुः
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ ११ ॥
वीक्षं वीक्षं तदानीमखिलभुवनमप्यात्मकुक्षौ वहन्तम्
यस्याग्रेद्योतमानं धरणिपतिरपि प्लावितोहर्षवर्षैः ।
साष्टाङ्गं वेङ्कटेशं वरदविरुदधिं प्राणमद्भक्तितस्तम्
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ १२ ॥
कल्याणं लिप्सुरुर्वीपतिरपिच तदारभ्य निर्मायतत्र
ग्रामं तद्वासिविप्रैः शुचिभिरनुदिनं कारयामास पूजाम् ।
आविर्भूतस्य यस्मिन्नवनितलजुषां भाग्यमूर्तेस्समूर्ते-
स्तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ १३ ॥
यस्याधस्तान्निवासी वरदवृषपतेः धर्मकर्तेतिनाम्ना
भूमीन्द्रेणैवपूर्वं विमलतरहृदा दत्तकेदारभागान् ।
सम्प्राप्याद्यापि पूजादिकमनुदिनं कारयन् कश्चिदास्ते
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ १४ ॥
यत्रासीनं महान्तं त्रिभुवनजननीसंयुतं लोकनाथं
श्रीमन्तं वेङ्कटाद्रेरमणमविरतं सेवितुं सज्जनानाम् ।
बृन्दं सानन्दमायात्यहमहमिकया क्षिप्रभद्रानुवाप्त्यै
तत्रत्यो वेङ्कटेशो विहरतुहृदये सर्वदा सर्वदायी ॥ १५ ॥
इत्थं शिरोद्रिविलसद्वेङ्कटेशानमस्तवम् ।
श्लोकैश्च पक्षसंख्याकैः चरिताख्यान पूर्वकम् ॥



कृतार्थयितुमात्मानं स्तवीमीतः परं विभुम् ।
पञ्चचामरवृत्तेन दशकेनतमीश्वरम् ॥
विधूतसर्वकिल्बिषं वितीर्णभक्तवाञ्छितं
विपन्नलोकरक्षकं विनम्रशोकहारकम् ।
मुदानतामरेश्वरं सदातनं पुरातनं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ १ ॥
सदामनस्सरोजकोशमध्यवासनासना
हतान्धकारदिव्यनेत्र मातनुष्व मां विभो ।
भवत्पदाब्जलग्नधी र्भवन्तमन्तरन्वहं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ २ ॥
अनेककोटिसूर्यभास्वरं निरीश्वरं विभुं
पदानमद्दिगीश्वरं स्वपार्श्ववेष्टितामरम् ।
मुराभिधेयदुष्टदैत्यकण्टकं महाशयं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ३ ॥
नयामि कालमन्वहं मुदैवदुष्टचिन्तया
त्वदीयभक्तिमन्तरा कथंनु मे गतिर्भवेत् ।
अतोभवन्तमेव सर्वसाक्षिणं हृदन्तरे
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ४ ॥
भवाम्बुधौ निमग्नमाशुतारयन्नरं विभो
विराजसेसकृन्नतं भवत्पदाम्बुजद्वये ।
सदानतं विधेहिमां नतीर्णसंसृतिं कुतो
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ५ ॥
पयोब्धिजामुखारविन्दभास्करं निरामयं
मुनीन्द्रचित्तकेकिबृन्द नीरदं निरञ्जनम् ।
पदब्जासेविदैन्यतूलभं जनप्रभञ्जनं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ६ ॥

स्वपादपद्मजातगाङ्गवारिपावितखिल-
प्रपञ्चवासिजन्तुवर्गमम्बुजाक्षमद्वयम् ।
समाधिदृष्टिदृश्यमानवैभवं चिरन्तनं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ७ ॥
चतुर्मुखास्य निर्गताखिलागमान्तवेदित-
स्वरूपमादिपूरुषं निरस्तदोषसंहतिम् ।
दिवाकरान्ववायदुग्धसिन्धुशीतदीधितिं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ८ ॥
कनत्सुवर्णकुण्डलद्वयीलसत्सुकर्णकं
सुगन्धिपुष्पभासमानहारशोभिवक्षसम् ।
अनन्तरत्नशोभमाननूपुराञ्चिताङ्घ्रिकं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ ९ ॥
फणीन्द्रभोगशायिनं शकुन्तराजवाहनं
रमाविलासजीविनं स्वभक्तचित्तगामिनम् ।
सदार्तिभीतिनाशनं गजेन्द्रमुक्तिदायिनं
शिरोद्रिवासिनं भजे प्रसन्नवेङ्कटेश्वरम् ॥ १० ॥
इमां प्रसन्नवेङ्कटाद्रिनायकस्तुतिं जनाः
दिनेदिने वदन्तिये समग्रभक्तितः क्षितौ ।
तदीयमानसाम्बुजं विधूयनश्वरं फलं
रमापतेः पदद्वये रमेत सादरं चिरम् ॥
स्तोत्रं व्यधायि भुवि साम्बशिवाभिधेन
निष्पक्षपातमनसां हृदयंगमं यत् ।
श्रीवेङ्कटाद्रिरमणाङ्घ्रि सरोजयुग्मे
भक्त्या तदर्पितमिदं मुदमातनोतु ॥

---



## ॥ सूक्तम् ४ मधुच्छन्दस आर्षं ऐन्द्रम् ॥

---

दिने दिने रक्षणार्थं कर्तारं शुभकर्मणाम् ।
ह्वयाम इन्द्रं गोपाला दोहनीयां हि गामिव ॥१॥
एहि नः सवनेष्वेषु पिब सोमञ्च सोमपाः ।
धनिनस्ते प्रसादो हि गवादिधनलब्धये ॥२॥
अथ विश्रामविद्याश्च विहितोपस्थितीस्त्वयि ।
आगच्छ देव नो याच्ञां न प्रत्याख्यातुमर्हसि ॥३॥
उपेक्षहिंसकं विप्रमिन्द्रं पृच्छ विपश्चितम् ।
यजमान सखिभ्यस्ते यो ददात्यवरं वसु ॥४॥
इन्द्रस्यैव हि शुश्रूषामस्मत्पक्ष्याश्चरन्ति ये ।
ते ब्रुवन्तु परे दूरमितो निर्यान्तु निन्दकाः ॥५॥
उच्यासुररयोऽप्यस्मान्धन्यान्किमुत बान्धवाः ।
ततस्त्वयि प्रसन्ने हि स्यामैव सुखिनो वयम् ॥६॥
यज्ञश्रियमिमं सोममर्पयस्वाशुमाशवे ।
इन्द्राय मादकं नृणां पतन्तं देवतर्पकम् ॥७॥
हतवानसि वृत्रांस्त्वमस्य पीत्वा शतक्रतो ।
अथ युद्धेषु युध्यन्तं भक्तं रक्षितवानसि ॥८॥
तं त्वां शतक्रतो देव युद्धेषु बलशालिनम् ।
पोषयामो हविर्दानैर्धनानामिन्द्रलब्धये ॥९॥
योऽयं महान्पूरयित्वा कर्मणां धनरक्षकः ।
सखा च सुन्वतां देवस्तस्मा इन्द्राय गायत ॥१०॥

---

*

## ॥ सूक्तम् ५ ऋष्यादि पूर्ववत् ॥

आगच्छतागच्छत भोस्सखायस्तोमवाहसः ।
अत्रोपविशत क्षिप्रं अथेन्द्रमभिगायत ॥१॥
पुरूणां वरणीयानामर्थानामिन्द्रमीश्वरम् ।
अभिगायत संभूय सुते सोमेऽरिसूदनम् ॥२॥
स एव नश्शुभायास्तु स एव वसुने तथा ।
स एव च धिये बहौ सोऽयमेत्वखिलैस्सह ॥३॥
संयुगेष्वभिगच्छन्तौ न प्रतीच्छन्ति शत्रवः ।
हरी यस्य रथे युक्तौ तस्मा इन्द्राय गायत ॥४॥
इह सोमा अभिषुताः शुचयो दधिसंस्कृताः ।
सोमपायिन इन्द्रस्य कबलाय व्रजन्त्यमी ॥५॥
इन्द्रज्यैष्ठ्याय देवेषु सोमानां पीतयेऽपि च ।
सद्यो विजृम्भितोत्साहस्समभूश्शोभनक्रतो ॥६॥
त्वामाविशन्तु गीर्वाणसोमा इन्द्राशुताजुषः ।
किञ्च प्रचेतसस्सन्तु तवेमे सुखहेतवः ॥७॥
बह्वृचोक्थास्सामगानांस्तोमाश्च त्वामवीवृधन् ।
अतोस्मत्स्तुतयोऽपि त्वां वर्धयन्तु शतक्रतो ॥८॥
यस्मिन्प्रतिष्ठितं सर्वं पौंस्नं सत्वं सहस्रिणि ।
तदेतदन्नं स्वीकुर्याद्वासनोऽक्षयरक्षणः ॥९॥
मा स्म द्रुह्यन्नस्मदीया मूर्तामर्त्या अरातयः ।
ईशान ! विपदोऽस्माकमिन्द्र ! गीर्वाण दूरय ॥१०॥

---



## ॥ सूक्तम् ६ ऋष्यादि पूर्ववत् ॥

अर्काग्निवायुरूपेणापीन्द्रमेवोपयुज्यते ।
जनास्तथास्यैव कला रोचन्ते दिवि तारकाः ॥१॥
कमनीयौ क्रतौ तस्य युज्येते रथपार्श्वयोः ।
शोणवर्णौ हरी धृष्णू पुरुषोत्तमवाहिनौ ॥२॥
अचेतनाय चैतन्यं रूपं रूपोज्झिताय च ।
प्रातः प्रयच्छन् जगते सायं मर्त्योऽप्यजायथाः ॥३॥
अनन्तरं च ग्रीष्मर्तोर्दधानानामयाज्ञियम् ।
मरुतो दधते गर्भमन्नानां बीजमादिमम् ॥४॥
विभ्राणोऽथ मरुत्संज्ञां यज्ञियां प्रावृडागमे ।
अभ्रेषु गर्भतां यासि लब्धहव्यानुरोधतः ॥५॥
दुर्गाण्यपि प्रभञ्जद्भिर्मरुद्भिस्सहितो भवान् ।
इन्द्रान्वविन्दत् पणिभिर्गा गुहास्वपि गोपिताः ॥६॥

---

१. अनया ऋचा इन्द्रः सूर्यात्मना वर्ण्यते । सायमस्तमयसूर्यस्य मरणत्वेनोपचर्यते ॥

२. अत्र मरुदात्मना ॥

३. व्याख्या—इन्द्रपारम्य:-परेऽस्मिन्सूक्ते प्रथमया ऋचा इन्द्रस्यैव सूर्याग्निमरुदात्मकत्वं प्रतिज्ञाय उत्तराभिः क्रमात् तदेव प्रतिपादयन् तृतीयया सूर्यात्मकतामुपवर्ण्य चतुर्थ्याऽनया मरुद्रूपतां समर्थयति । बिभ्राण इति – यस्त्वं ग्रीष्मे सूर्यात्मना अभिव्यज्यसे स एव प्रावृष्यागतायां मरुत इति यज्ञप्रसिद्धं नाम बिभ्राणस्सन् वृष्टिसम्पादनाय पर्जन्यस्य गर्भं प्राप्नोषि । तच्च पर्जन्यगर्भगमनं लब्धहव्यानुरोधेनैव । यदि जना यज्ञेषु बहुतरं हविस्तुभ्यं व्यतरन् तर्हि त्वं प्रभूतां वृष्टिं करोषि । विरलमेव हविर्लब्धं चेत् विरलामेव वृष्टिं ददासीति भावः । किञ्च विचित्रं ते चरित्रमिति विस्मयोऽपि व्यज्यते । तथा हि पूर्वस्यामृचि प्रतिपादितं त्वं सूर्यात्मना सायं सायं परेत्य प्रातः प्रातरुत्तिष्ठसीति । इदानीमुच्यते स एव त्वं ग्रीष्मे गते पर्जन्यस्य गर्भत्वं गच्छसीति । कथमेक एव पुरुषः एको क्षणे गर्भं गच्छति जायते परेति चेति विस्मयः । सायणाचार्यैस्त्वन्यथा मन्यते ॥

४. व्याख्या—अस्ति किञ्चिदुपाख्यानम् पणिभिरसुरैर्देवलोकात् गावोपहृता अन्धकारे प्रक्षिप्ताः ताश्चेन्द्रो मरुद्भिस्सहाजयदिति तदेतदत्रानुसन्धेयम् ॥

इन्द्रं यथैव नेतारं तथैव मरुतां गणम् ।
विश्रुतं वसुसम्पन्नमस्तुवन् देव वन्दितः ॥७॥
इन्द्रेण सङ्गच्छमानं पश्येम हि मरुद्गणम् ।
अभीरिन्द्रो नित्यहृष्ट उभयौ तुल्यवर्चसौ ॥८॥
अनवद्यैः सेवनीयैर्द्युचरैर्मरुतां गणैः ।
परीतमिन्द्रं सुभृशं मघोनः पूजयत्ययम् ॥९॥
दिवो वाप्यन्तरिक्षाद्वा सर्वव्यापिन्मरुद्गण ।
तदागच्छत्वगीयन्ते स्तोत्राण्यत्र मखे तव ॥१०॥
इतो वा पार्थिवाल्लोकात्ततो यद्वा द्युलोकतः ।
महतो वाथान्तरिक्षादिन्द्रं याचामहे वसु ॥११॥

---

## ॥ सूक्तम् ७ ऋष्यादि पूर्ववत् ॥

---

उद्गातारो बृहत्साम्ना ऋक्सूक्तैर्बह्वृचास्तथा ।
अध्वर्यवो यजुर्मन्त्रैरिन्द्रमेव स्तुवन्ति हि ॥१॥
सह योजयिता हर्योरिन्द्र एव तथा हितौ ।
युञ्जाते तस्य वाङ्मात्रादिन्द्रो वज्री हिरण्मयः ॥२॥
निरन्तरायं लोकानामालोकाय दिवस्थले ।
इन्द्र आरोहयत्सूर्यं जलायाभ्रं तथाभिनत् ॥३॥
गजाश्वकुलरूपस्य वसुनो लाभहेतुषु ।
इन्द्रयुद्धेषु पाह्यस्मानुग्र उग्राभिरूतिभिः ॥४॥
वयं महति संग्रामे तथा क्षुद्रे कलावपि ।
ह्वयामस्सहकृत्वानमिन्द्रं वृत्रेषु वज्रिणम् ॥५॥
(क्रमशः)

५ ऊतिभिः = रक्षणैः, रक्षाप्रकारैः

## ॥ आवश्यकता वेदाङ्गाध्ययनस्य ॥

( पूर्वप्रकाशितात्परम् )

वेदान्परमधीत्य वेदार्थमधिगन्तुमव्यवसायिनामन्तिकमपि तादृशं फलं ।या- याङ्क्षा नह्यायायात् प्रत्युत वयं वेदान्विद्म इत्यहंतापिशाचिकाग्रस्ताश्चेद्विपरीतं कर्म समाचरन्त स्वकीयं कर्म विजहतः नरकमेव प्राप्तुमर्हेयुरिति निश्चप्रचं। अतो वेदमध्येतुं योग्यतामापन्नानां द्विजन्मनां वेदाङ्गाध्ययनमावश्यकमिति विषये कारणमन्यादितोप्यन्वेषणीयमस्ति वा नहिनाहि ।

केचित्तु वेदः कृत्स्नोधिगन्तव्यइत्यादिना वेदाभ्यासस्य खल्वावश्यकत्वं विहितमास्ते तदप्रतिपाद्य वेदाङ्गाध्ययनस्यावश्यकतां प्रतिपादयितुं कथंवायमारेभ इति संदिहीरन् । पश्यत । भुवने हि वेदाध्ययनं कर्तव्यमिति श्रुतिचोदितमर्थमनवगच्छन्तोप्यनवगच्छन्तोपि वा सर्वेपि द्विजातयः वेदान्परमध्येतुमुपक्रमन्ते । न तु तदर्थानवगन्तुं तदङ्गानि । अङ्गाध्ययनमन्तरा अङ्गिनं केवलमधीयानानां द्विजन्मनां पुरतोऽयमुपन्यासस्सफलस्स्यात् । यदि वेदमपि नाधीयते तर्हि तच्छ्रवसोः कथं वा निपतेदिदं वचनम् । सांप्रतं हि भुवने वेदः कृत्स्नोधिगन्तव्यइत्यंशं परं सार्थयितुमभिलपन्तः स्मृत्युक्तेरविरुद्धमेव वनान्तमधीयानाः, सरहस्यो द्विजन्मना इत्यंशं सूक्ष्मीकृत्य अपश्यन्तो बहवो द्विजन्मानः पदक्रमघनान्परं पठन्ति । तथा परिश्रम्य वेदं कृत्स्नमपि मुखस्थीकुर्वन्तः अर्थमपि यदि च विदुः तर्हि तत् तेषां तदधिष्ठितभुवनानां च शिवमुद्भावयेदिति अल्पज्ञस्य मम धियो भासमानं विषयं किञ्चिदिव प्राचीकटं । वेदस्यानुपूर्वीं अनधीत्यैव ये वेदाङ्गादीनधीयते तेपि बुध्येरन् वेदार्थं। यथा उभयमप्यधीयाना महान्तः वेदार्थमवबुध्य सत्कर्मणि प्रभवेयुः न तथा वेदाङ्गाध्ययनमात्रपराणां प्रभुत्वं संभवेत् । तथाच वेदाध्ययनमावश्यकं द्विजन्मनामिति फलितम् । वेदाध्ययनस्यावश्यकतां सिद्धवत्कृत्य वेदं समग्रमधीत्यापि तदङ्गाध्ययने अप्रवर्तमानानां तदर्थानवबोधेन जायमानं महत्फलमालोच्य करगतमपि तादृशं फलं प्रच्यावयतामत्रएव निवेदयितुमुद्युंजिमविनयम् ।

पश्यत लौकिकोदाहरणान्यप्यपराणि यथाहि लोके । अचक्रो न गच्छति रथः अपादो न धावति तुरगः । अशाखो न शोभते तरुः । अनालंबं

न तिष्ठति मन्दिरम् । अरसो न रोचते पदार्थः, अपात्रो न पचति पुरुषः । तथा अनङ्गो न जीवति जन्तुः । अङ्गेष्वस्मदीयेषु विहतमेकं चेद्भवति विनाङ्गेन तेन वयं साङ्गैः पुरुषैः क्रियमाणं कर्म यत्तादृशं कर्तुं न शक्नुमः । अङ्गविकला इति जनैर्विगीता भवामः । अतोऽङ्गविहीनं वस्तु कस्मिन्कर्मण्युपयोगमर्हति । प्रत्युत अङ्गहीनः पुमान् कर्म स्वकीयमपि कर्तुं अशक्नुवन् परैषामप्यनुपकुर्वन्नुपकारमितरैः क्रियमाणं प्रतिपश्यन् पापायात्मानमुपयुङ्क्ते । स्वीयम् अङ्गं विना अधीतोऽपि वेदः अर्थज्ञानविहीनानां द्विजन्मनां तादृशप्रयोजनं न कदापि प्रापयेत् यादृशं जनयति फलं साङ्गमधीतो वेदः । किञ्च वेदाङ्गाध्ययनेन वेदार्थं विदन्तो जना अदृष्टं फलं केवलं न यान्ति । परं तु दृष्टान्यपि बहूनि फलान्यवाप्नुयुः । पश्यत । अर्थावबोधपूर्वकं स्वानि कृत्यान्यनुतिष्ठेयुः । तादृशानामेव सत्पुत्रप्राप्तिः धनधान्यपश्वादीनां विवृद्धिश्च भवेदिति नूनम् । स्वाधीतां विद्यामन्येभ्योऽपि वितरन्तः समुचिते काले तैः कृतां परिचर्यां लभेरन् । बहुभिरंतेवासिभिः परिवेष्टिताः कृत्यानि नित्यनैमित्तिकानि अनुपसञ्जातोपरोधं निर्वर्तयेयुः । इत्थं बहूनि विद्यन्ते फलानीति सर्वज्ञानामग्रतः किं वास्ति निवेदनीयम् । आतश्च प्राचीना आस्माकीना यादृशं पन्थानमनुवर्तमानाः प्राप्तपरमपदास्समभूवन् । तादृशमेव मार्गं चेद्वयमप्यनुसरामः तर्हि कालेन कतिपयेन महत्तायाः परां काष्ठामधिगच्छेमेति नियतम् । तेहि अङ्गाध्ययनेन साकमङ्गिनं वेदमभ्यस्यन्तः तदर्थं कात्स्न्र्येन जानन्त; परमं पदं प्रापन् । वयमपि तथैव कुर्वाणास्तादृशं पदमाप्नुयाम । अतो वेदाङ्गाध्ययनमावश्यकमिति विषयस्य साधयित्रीः युक्तीस्समालोच्य धिया पश्यतामस्माकम् मनस्यादर्शइव तदावश्यकता प्रस्फुरेदिति किञ्चिदज्ञोहं वेदशास्त्रपारदृश्वनां महतां धुरि न्यवेदयमिति विषये क्षमन्तां महान्त इति संप्रार्थयेतमामित्यस्तुतमां सर्वं शुभम् ।

॥ प ॥ गुरुचरणचरणयुगळीविरचितहृदयेन सांबशिवनाम्ना ।
गदितोयमुपन्यासो भवतु मुदे वेङ्कटाद्रिरमणस्य ॥

—:०:—

# ॥ श्रुतिसूक्तिमाला ॥

[ पूर्वप्रकाशितात्परम् ]

प्रमाणोपन्यासपुरस्सरं नमश्शेषित्वं प्रतिजानीते ।

**देव त्वदेकविषयाणि नमांसि पुंसां**
**यस्मै नमश्श्रुतिबलादवधारयामः ।**
**देवान्तरेषु विहितान्यपि तान्यमूनि**
**स्रोतांसि सागर इव त्वयि संपतन्ति ॥ १० ॥**

हे देव दीव्यतेः क्रीडार्त्थत्वाद्देवशब्देन लोकभर्तुः लीलाकैवल्यमित्यर्थःन्यायविषयो लक्ष्यते । तेन नित्यतृप्तस्यापि देवस्य सर्वजगन्निर्मातृत्वनियन्तृत्वादिकान्निरभिसन्धिकमेव लीलारूपमुपवर्णितं भवति । तथाच श्रूयते । कार्यं क्षित्यादि कर्तेश स्तत्कर्तुर्नोपयुज्यते । न स्वार्थमप्यचिद्भावात् नानर्त्थं कर्तृगौरवात् । पारिशेष्यात्परार्त्थन्तत् क्षेत्रज्ञस्सः परस्तयोः । ज्ञानमप्रतिमन्नित्यं वपुरत्यन्तनिर्मलं । ऐश्वर्यमप्रतिद्वन्द्वं सुखमात्यन्तिकं बलं । परिपूर्णस्य सर्गाद्यैर्नात्मनोऽस्ति प्रयोजनं । कृतकृत्यस्य तृप्तस्य किन्नाम क्रियते जनैः । इति । वायवीयसंहितायां । शिवस्य परिपूर्णस्य किन्नाम क्रियते जनैः इति शिवधर्मे । ईश्वरस्तु स्वतन्त्रत्वात् प्रपञ्चस्यास्य सर्वदा । सृष्टिस्थितिविनाशांश्च कुर्वन्नाभूतसंप्लवात् । एता लीला महेशस्य सर्गरक्षालयाः प्रभोः । इति । मार्कण्डेयपुराणे । भोगार्त्थं सृष्टिरित्यन्ये क्रीडार्त्थमिति चापरे । देवस्यैषस्वभावोयमाप्तकामस्य का स्पृहा । इति । माण्डूक्योपनिषदि । यस्मै नमस्तस्मै त्वाजुष्टं नियुनज्मि यस्मै नम स्तच्छिरः । इति च श्रुतिबलात् पुंसान्नमांसि त्वदेकविषयाणि अनन्यविषयाण्यवधारयामः । निश्चिनुमः । ननु देवतान्तरविषयाण्यपि नमांसि क्रियन्व इति प्रतीयते । अत आह देवान्तरेष्विति । देवान्तरेषु ब्रह्मादिदेवान्तरेषु । विहितान्तप्यमूनि नमांसि स्रोतांसि जलप्रवाहा स्सागर इव त्वयि अवसानभूमौ संपतन्ति । अन्येषामनीश्वरत्वात् । तथा च द्रोणपर्वणि । रुद्रस्य च भविष्यामः पशव स्सर्वकर्मसु । निपातयिष्यते चैतानसुरान्भुवनेश्वरः । फलंयेन्ये प्रयच्छन्नि भक्तानान्त्रिदशाः क्वचित् । तेप्याराध्य महादेवं त्रिणबिन्दोऽन्यथा न हि । इति । ब्रह्मविष्ण्वादयो देवा ये केचित्स्थाणुजंगमाः । उमाधवस्य ते सर्वे बालक्रीडनका इमे । कालिकाखण्डेप्युक्तं सर्वा-

❊

नुग्राहकपरमेश्वरप्रसादं विना स्वभक्तफलदातृत्वमपि ब्रह्मादीनां देवतानान्नास्तीति लैङ्गयकाशिकाखण्डयोश्श्रूयेते । विष्णुरपि स्वभक्ताय ध्रुवाय ध्रुवपदमीश्वरप्रसादलब्धं दत्तवानिति तस्मात्तत्र पर्यवसितानि नमांसि तदन्तर्यामिणन्त्वामेव प्राप्नुवन्तीत्यर्थः ॥ १० ॥

अनयोः श्रुत्योरर्थमाह ॥

**यस्मै नमश्श्रुतिरनूद्य नमस्विनन्त्वां**
**एका नियोजनमुवाच पशोः कपर्दिन् ।**
**अन्या च दिव्यशिशुमारशिरो भवन्तं**
**शक्यन्तदित्थमुभयेन नमो विधातुं ॥ ११ ॥**

हे कपर्दिन् एका यस्मै नमः श्रुतिः यस्मै नम स्तस्मै त्वा जुष्टन्नियुनज्मि । इति श्रुतिः । नमस्विनन्त्वामनूद्य उद्दिश्य पशोर्नियोजनमुवाच । अन्या । यस्मै नमस्तच्छिरः । इतिश्रुतिः भवन्तं दिव्यशिशुमाराशिरः दिव्यशिशुमारशिरोरूपत्वेन निरूपितमाह उभयेन श्रुतिचयेन इत्थमुपपादितप्रकारेण नमो नमस्कारः विधातुं त्वच्छेषत्वेन तात्पर्यतः प्रतिपादयितुं शक्यं ॥ ११ ॥

श्रुतिद्वयेऽपि सर्वत्र नमोलक्षणः कश्चिदेव प्रतीयते नतु तल्लक्ष्यईश्वर इत्याशंक्य पौर्वापर्यपर्यालोचनया प्रतीयत इत्याह श्रुत्योरिति ।

**श्रुत्यो र्द्वयो रपि नमस्विनमुच्यमानं**
**त्वामेव तन्तमनुसन्दधतः प्रदेशं ।**
**शंसन्ति मन्दमतयोऽपि किमापतन्तं**
**मध्यन्दिने हि सवितारमपन्हवीरन् ॥ १२ ॥**

तं तं प्रदेशं श्रुत्योः पूर्वापरभागं अनुसन्दधतः पर्यालोचयन्तो विद्वांसः श्रुत्योर्द्वयोरपि त्वामेव नमस्विनमुच्यमानं शंसन्ति कथयन्ति श्रुतिद्वयपूर्वापरपर्यालोचनया नमोलक्षणमीश्वरं देवं निश्चिन्वन्तीत्यर्थः तथाहि मन्दमतयः जडधियोपि आपतन्तमागच्छन्तं मध्यन्दिने सवितारं किमपन्हुवीरन् किमपलपेयुः अतिस्फुटतया प्रतीयमानत्वकोप्यपलपतीत्यर्थः ॥ १२ ॥

ईश्वरदेवताके शूलगवाख्ये कर्मणि पशुनियोजनमन्त्रस्य विनियोगात्



शूलगवाख्यकर्मपौर्वापर्यपर्यालोचनयापि तन्मन्त्रस्येश्वरप्रतिपादकत्वं स्फुटमवगम्यत इत्याह ।

**कर्मैव शूलधर शूलगवन्त्वदीयं**
**मन्त्रा भवन्तमखिलाः प्रतिपादयन्ति ।**
**त्वामन्तरेण नमसा कृतलक्षणाय**
**कस्मै पशुं नियुनजानि नियोजय त्वं ॥ १३ ॥**

हे शूलधर अथ शूलगवस्संवत्सरेसंवत्सरे मार्गशीर्ष्यां पौर्णमास्यामिति अथ शूलगवस्संवत्सरेसंवत्सरे शरदि वसन्ते वेत्यादितश्च साकल्येन पशुपतिदैवत्यं बोधायनेनाश्वलायनेनोक्तं शूलगवनामकं कर्म त्वदीयमेव शूलोस्यास्तीति शूलः अर्शादिभ्योऽच् शूलीत्यर्थः तद्व्रते रुद्राय यो गवा पशुना याग स्सशूलगव इति व्युत्पत्तिपर्यालोचनया त्वदीयं प्रतीयत इत्यर्थः मन्त्रलिङ्गादपि त्वदीयमित्याह मन्त्राइति बर्हिरादाय गामुपाकरोति ईशानाय त्वा जुष्टमुपाकरोमि ईशानाय त्वा जुष्टं प्रोक्षामि ईशानस्थालीपाकं श्रपयन्ति अथ यदि गान्नलभते मेषमजं वा लभते ईशानस्थालीपाकं वा श्रपयन्ति तस्मादेतत्सर्वं करोति यद्गवा कार्यमिति यथाह चाश्वलायनः पशूनामुपताप एतमेव देवं मध्ये गोष्ठस्य यजेतेति देवशब्दश्च रुद्रपर्यायः । देवः पूज्यः पिनाकी । इति निघण्टुः । अष्टमीप्रदोषस्य कर्मणि देवस्यायतने प्रतिदिशं प्रद्योतयतीति बोधायनवचनाच्च देवमेवानुप्रविशति । इत्यथर्वशिरासि श्रवणाच्च एतं सर्वं रुद्रं यज्ञेष्वीशानमुपस्थानादिति चन्द्रमा इति बोधायनीये तावत् ईशानाय त्वा जुष्टं प्रोक्षामीति सहस्राणि सहस्रशइति ईशानन्त्वा भुवनानामभिश्रियमिति भवाय देवाय स्वाहेत्यादयो भवस्य देवस्य पत्न्यै स्वाहेत्यादयो भवस्य देवस्य सुताय स्वाहेत्यादयो नमस्ते रुद्र मन्यव इत्यनुवाकयोरन्नाविचीयते स्थिताः आश्वलायनके च रुद्राय महादेवाय युष्टो वर्द्धस्वेति यस्मै नम स्तस्मै त्वा जुष्टं नियुनज्मीति हराय कृशाय शर्वाय शिवाय भवाय महादेवाय उग्राय पशुपतये रुद्राय शङ्करायेशानाय स्वाहेति यास्ते रुद्र पूर्वस्यान्दिशि स्नोताभ्य एव नमः नमस्ते अस्तु मामाहिंसीरिति कद्रुद्राय

इमारुद्राय आतेपितरि इत्यादयश्चाखिलामन्त्रा भवन्तं प्रतिपादयन्ति तद्धि तेन चतुर्थ्या वा मन्त्रवर्णेन भाष्यते देवतासंगतिरिति मन्त्रलक्षणप्रमाणेन शूलगवस्येश्वरदेवताकत्वनिश्चयात् अतस्तन्मध्यपातीपशुनियोजनमन्त्रोऽपि पशुपतिमेवलक्षयतीति युक्तं अतस्त्वामन्तरेण नमसा कृतलक्षणाय कस्मै देवाय पशुन्नियुनजानि नियोजयितुमवकाशं लभेमहि स्वराद्यन्तोपसृष्टादितिवक्तव्यं इति निपूर्वाद्युजेरात्मनेपदेन भाव्यं नियुनजानीतिपरस्मैपदंमृग्यं त्वं वा नियोजय त्वयेश्वरेणापि अन्यथा नियोजयितुमशक्यमिति भावः ॥ १३ ॥

यस्मै नम स्तच्छिर इति श्रुतिरपि पौर्वापर्यपर्यालोचनया परिशेषप्रमाणेन त्वामेवावगमयतीत्याह । अङ्गान्तरेष्विति ।

**अङ्गान्तरेषु विबुधान्तरसंस्तुतेषु**
**यच्छिशुमारशिरसः परिशिष्यसे त्वं ।**
**तस्मै नमो भवितुमीश्वर सांप्रतन्ते**
**देवान्तराय न कथञ्चिदनीश्वराय ॥ १४ ॥**

तैत्तरीयकाः समामनन्ति भूःप्रपद्यइत्यादि तत्र कश्यपश्शिशुमारतया निरूप्यते । यस्मै नमस्तच्छिरो धर्मो मूर्द्धानं ब्रह्मोत्तराहनुर्यज्ञोधरा विष्णु र्हृदयं संवत्सरः प्रजाननमश्विनौ पूर्वपादावत्रि र्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्र स्ततः प्रजापति रभयञ्चतुर्थं सवा एष दिव्यश्शाक्वर शिशुमार स्तं हय एवं वेदापपुनर्मृत्युञ्जयति जयति स्वर्गं लोकं नाध्वनि प्रमीयते नाप्सु प्रमीयते नाग्नौ प्रमीयते नानपत्यः प्रमीयते लघ्वान्नोभवति ध्रुवस्त्वमसि ध्रुवस्य क्षितिरसि त्वं भूतानामधिपतिरसि त्वं भूतानां श्रेष्ठासि त्वां भूतान्युपपर्यावर्तन्ते नमस्ते नम स्सर्वन्ते नमः । इति तत्र शिशुमारात्मतया निरूपितकश्यपस्याङ्गान्तरेषु शिरोव्यतिरिक्तावयवान्तरेषु मूर्द्धोत्तराहनुरधराहनुर्हृदयं प्रजोत्पादकेन्द्रियपूर्वापरपादपुच्छमध्यापरपादप्रथमकाण्डद्वितीयकाण्डतृतीयकाण्डचतुर्थकाण्डाख्येषु विबुधान्तरेषु संस्तुतेषु धर्मब्रह्मयज्ञविष्णुसंवत्सराश्विन्यत्रिमित्रावरुणाग्नीन्द्रप्रजापतिसंसारभयनिवर्तकब्रह्माख्यदेवतान्तरत्वेन संस्तुतेषु देवतात्मकतयाऽभिहितेषु शिशुमा-



राशिरसस्संस्तवाय यस्त्वं परिशिष्यसे परिशिष्टो भवसि यद्यपि सूर्यादयोऽपि बहवः परिशिष्टास्सन्ति तथापि स्तोमं वो अद्येति मन्त्रेण रुद्रस्यैव नमस्त्वामित्वस्य स्फुटावगमात् तस्यैवात्रापि परिशिष्टता न्याय्येति परिशिष्यसइत्युक्तं हे ईश्वर तस्मै ते नमो भवितुं सांप्रतं युक्तं अनीश्वराय देवान्तराय कथञ्चिद्भवितुन्नसांप्रतं अनीश्वर स्स्वत एव नमस्कारानर्हः किंपुनरीश्वरे तिष्ठतीत्यर्थः ईश्वर इत्यनेन ईश्वरत्वमेव नमस्स्वंभवन्धिकारणमित्युक्तं भवति तथाचेश्वरस्यैवेश्वरत्वं श्रूयते । सोऽयमात्मत्रयस्यात्र प्रकृतेः पुरुषस्य च । लीलाकृतजगत्सृष्टुरीश्वरत्वे व्यवस्थिता । यस्सर्वस्मात्परो नित्यो निर्मलः परमेश्वरः । इत्यादि पौनःपुन्यप्रतिपादकेश्वरत्वानीश्वरत्ववचनेन तावदलं तथाप्रतिपादनेऽपि दैवोपहतस्य पुरुषस्य नाश्वासो भवति । तथाचोक्तं । समुज्वलन्यायसहस्रसाधितोप्युपैति सिद्धिन्नविमूढचेतसां । महेश्वरः पाणितले स्थितोपि सन् पलायते दैवहतस्य सन्मणिः । इति । तथाच पाद्मेपुराणे । ईश्वरं प्रति विष्णुनमस्कारश्श्रूयते । नमस्ते देवदेवेश नमस्ते शाश्वताव्यय । न जानेऽहं भवन्तञ्च त्वं त्वां वेत्थ नमोनमः । शरणन्त्वां प्रपन्नोऽस्मि चक्षुर्मे दीयतां प्रभो । प्रणामं केवलं कर्तुं शक्तोस्मि नहि वेदितुं । इति अन्येषामनीश्वरत्वात्तवैवेश्वरत्वात् नमस्कारार्हता प्रतीयते ॥ १४ ॥

रङ्गोपजीविनोपि यतो नमस्कारमुद्रया भवन्तमभिनयन्ति अतो नमश्शेषित्वं तवैव युक्तमित्याह—

**या वज्रिणी भवति शङ्कर शङ्खिनी या**
**मुद्रा च या कमलिनी भरतोपदिष्टा ।**
**ताभिर्भवन्त्यभिनया विबुधान्तराणां**
**मौलिस्पृशा करपुटाञ्जलिमुद्रया ते ॥ १५ ॥**

हे शङ्कर भरतोपदिष्टा वज्रिणीति या मुद्रा भवति विद्यते शङ्खिनीति कमलिनीति च ताभि र्विबुधान्तराणां शक्रविष्णुब्रह्मणां क्रमेणाभिनया भवन्ति ते मौलिस्पृशा शिरस्यासीनया करपुटाञ्जलिमुद्रया नमस्कारमुद्रया अभिनयो भवति तथाचोक्तं भरतशास्त्रे । वज्रिण्या मुद्रया शक्रं पद्मिन्या दर्शयेद्विधिम् । शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रया । इति इन्द्रादी-

नामायुधमुद्रया अभिनयेऽप्यस्यापि त्रिशूलाद्यायुधविशेषेणाभिनयितव्ये सति तद्विहाय नमस्कारमुद्रया अभिनयः कृतः इति यत् अतोपि तस्यैव नमस्कार इत्यतितरां स्फुटं भवति ॥ १५ ॥

एवमीश्वरैकलक्षणतया नमसां प्रमाणसिद्धे रन्ये देवा जनै र्दत्तान्यपि नमांसि स्वीयतया गृहीतुन्नशक्नुवन्तीत्याह ।

दत्तन्नमः किमुपशुश्रुम देवताभ्यः
त्वामन्तरेण नमसामवसानभूमिम् ।
ता स्तद्गृहीतुमनलन्न हि कश्चिदीष्टे
चोरोपनीतमिव धारयितुं किरीटम् ॥ १६ ॥

देवताभ्यः ब्रह्मादिभ्यः दत्तमपि नमः शुश्रुम नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि । इत्यादि श्रुतिभ्यो वयं श्रुतवन्तः नमसामवसानभूमिं त्वामन्तरेण त्वां विना देवता स्तन्नमो गृहीतुं स्वीकर्तुमनलमसमर्थाः हि यस्मात्कारणात्कश्चिदपि नमस्कारश्चोरोपनीतात्किरीटमिव सार्वभौमेन धार्यकिरीटन्धारयितुं स्वीकर्तुं क्षुद्रो यथा नेष्टे न प्रभवति अन्यमन्यमुपतिष्ठमानान्यपि नमांसि महेश्वर एव विश्राम्यन्ति न मध्ये फलं प्रयच्छन्ति तथा च मरुतः प्रस्तुत्य बह्वृचाः समामनन्ति । स्तोमं वो अद्य रुद्राय शिक्वसे क्षयद्वीराय नमसादिदिष्टन । एभि शिवस्ववां एव यावभि र्दिवस्सिषक्ति स्वयशाः निकामभिरिति । हे मरुतः स्तोमं स्तोत्रं वः युष्माकं शिक्वसे शक्ताय निग्रहानुग्रहक्षमाय क्षयद्वीराय क्षयन्ति निवसन्ति वीरा वीरभद्रादयो गणा यमाश्रित्य क्षयनिवासगत्योरिति धातुः तस्मै रुद्राय नमसा नमस्कारेण सहार्थे तृतीया दिदिष्टन दिशत एभि स्तुतिनमस्कारैः एकवचनोपात्तयोरपि स्तुतिनमस्कारयो र्नानारूपत्वादेभिरिति बहुवचनं तैरसाधारणभूतैः स्ववान् स्वामी स्वयशाः अनन्यसाधारणयशाः एव यावभिः एतव्याः कामाः तेषु यावभिः आपतद्भिः कामेकामे समापतद्भिरित्यर्थः निकामभिः नितरां कामैः दीव्यन्तीति दिवः देवाःतान् युष्मान् सिषक्ति संयोजयति अयं भावः



हे मरुतः युष्मदुद्देशेनास्माभिः क्रियमाणानि स्तोत्राणि नमांसि च रुद्राय प्रयच्छत यैः स्तुतिनमस्कारैः स्ववानीश्वर स्तत्तदपेक्षितैः फलै र्देवान् भवादृशान् संयोजयति तस्मादन्यविषयाणामपि नमसामीश्वर एव पर्यवसानं एवमन्यविषयाणामपि स्तुतिजातानामीश्वरैकपर्यवसानता द्रष्टव्या स्तुतिनमस्कारयोरेकविषयत्वनियमात् । तथा चोक्तं सर्वज्ञकालिदासेन । अस्तोतु स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः । इत्यादि । स्वयमन्यस्य स्तोता न भवतीति अस्तोता तस्य किन्तु स्तूयमानस्य सर्वैस्तुत्यस्य वन्द्यस्य अनन्यवन्दिनः स्वयमन्यं न वन्दत इति अनन्यवन्दिनः इत्यादि । एतदभिप्रायेण कश्यपे भूताधिपतित्वेन संस्तुते । सर्वन्तेनमः । इति श्रुतिः तदिदमुक्तं नमसामवसानभूमिमिति । ननु आकाशात्पतितं तोयं यथा गच्छति सागरं । सर्वदेवनमस्कारः केशवं प्रति गच्छति । इति केशवस्य नमस्कारपर्यवसानभूमितोक्ता सत्यं तथापि अस्य वचनस्य स्मृतित्वेन स्तोमं वः इत्यादि श्रुतिविरोधात् विरोधाधिकरणन्यायेन सर्वावेष्टनस्मृतिवदप्रामाण्यं वक्तव्यं तथा हि । विरोधे त्वनपेक्षं स्यादसति ह्यनुमानं । इति ज्योतिष्टोमे महावेद्यां सदो नामकस्य कस्यचिन्मण्डपस्य मध्ये काचिदौदुंबरी शाखा निखन्यते तस्याश्च वाससा वेष्टनं स्मर्यते । औदुंबरी सर्वा वेष्टयितव्या इति स्मृतिः । औदुंबरीं स्पृष्ट्वोद्गायेत् । इति श्रुतिः । तत्र संशयः । एषा स्मृतिः प्रमाणं न वेति । तत्र पूर्वाधिकरणे अष्टकाः कर्तव्या इत्यस्या स्मृतेर्मूलवेदानुमापकत्वेन प्रमाण्यमुक्तं तेनैव न्यायेन सर्वावेष्टनस्मृतेः प्रामाण्यमिति पूर्वः पक्षः औदुंबरीं स्पृष्ट्वोद्गायेदित्यनेन प्रत्यक्षवेदवचनेन स्पर्शो विधीयते न च सर्वावेष्टने स्पर्शसंभवति अतो मूलवेदानुमापकस्याप्रामाण्यमुक्तं तेनैव न्यायेन कालात्ययापदिष्टं तस्माद्विप्रलम्भकवाक्यवन्निर्मूला सर्वावेष्टनस्मृतिरप्रमाणं तद्वत्केशवनमस्कारपर्यवसानस्मृतिरप्यप्रमाणमितीश्वरस्यैव स्तुतिनमस्कारपर्यवसानभूमिताऽङ्गीकार्येति सिद्धम् ॥ १६ ॥

ननु ईश्वरादन्येषां नमस्कारानर्हत्वात्तद्विषयो नमस्कारो व्यर्थ इत्यत आह ॥

ह्मणां कूटस्थ इति प्रतिपादनादपि ब्रह्माद्यैस्सर्वैर्ब्राह्मणैस्त्रयीसारभूतगायत्रीमन्त्रवाच्यगर्भपरिशीलनादपीश्वरोपासकानामेव ब्राह्मण्यं नान्येषामित्यवगन्तव्यं परब्रह्मस्वरूपस्य सम्यक् निर्द्धारितत्वात् सामवेदप्रपदमन्त्रेऽति स एव साक्षाद्ब्राह्मण इत्यभिधानात्तदुपासकानामेव ब्राह्मण्यं । एवं पराशरपुराणेऽपि । ततो विप्रस्य सम्बन्धश्शिवेनैव हि युज्यते । संकरास्सर्वदेवाश्च वृषळश्च पुरन्दरः । पितामहस्तु वैश्यश्च क्षत्रियः परमो हरिः । ब्राह्मणो वै सदा लोके ब्राह्मणं चोपधावति । महाब्राह्मणमीशानमुपधावेन्नचेतरं । इति । यजुर्वेदे ऽपि । यो वै स्यां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति । इति । अतियजते अतिक्रम्य यजते स्वस्य देवतायाः देवतान्तरयजनमेवातिक्रमः तस्मात्स्वायै देवतायै प्रच्यवते परां गतिमपि न प्राप्नोति पापीयान्भवति । इति तस्यार्थः । यजुर्वेद एव । एष वो भरताराजा सोमोऽस्माकं ब्राह्मणानां राजेत्याह तस्मात्सोमराजानो ब्राह्मणाः । इति । यजुर्वेदं क्षत्रियस्याहुर्योनिं सामवेदो ब्राह्मणानां प्रसूगिः । इति । अनेन रुद्रदेवत्यसामवेदप्रसूता ब्राह्मणाः तस्मात्तेषां रुद्र एवोपास्य इति श्रुतिषु बहुधा श्रूयते अत्रेदं प्रसङ्गाङ्गमूचिरे यस्य पितृपितामहप्रपितामहा यं देवमाराधयन्ति असावपि तं देवमाराधयेदिति नियम इति तन्न पित्राद्याराधिते भक्त्यभावात् तथाहि वैष्णवस्य दशरथस्य पुत्रो रामो माहेश्वरः माहेश्वरस्य हिरण्यकशिपोः पुत्रः प्रह्लादो वैष्णवः वैष्णवस्य वसुदेवस्य पुत्रः कृष्णो माहेश्वरः वैष्णवस्य पराशरस्य पुत्रः व्यासो माहेश्वरः । इति । प्रतिष्ठाप्य महादेवं सेतुमध्ये स राघवः । अवाप परमां सिद्धिं शिवे शंभोरनुग्रहात् । इत्यादिना रामचन्द्रस्य माहेश्वरत्वमवगम्यते व्यासकृष्णयोस्तु । तस्माद्व्यासात्परो नान्यश्शिवभक्तो जगत्त्रये । न कृष्णादधिकस्तस्मादस्ति माहेश्वराग्रणीः । नार्जुनेन समश्शंभोर्भक्त्या पूतो भविष्यति । मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतं । इत्यादि ॥ १२४ ॥



ननु शिवसंस्कारहीनानां शिवप्रसादस्याभोज्यत्वे को हेतुरिति श्लोकत्रयेणाह --

उत्कर्षतः परिहरन्त्यपकर्षतो वा
का वासना भवति कस्य कृते न विद्मः ।
यद्दीक्षितस्य पतितस्य च तुल्यरूपं
प्रत्यादिशन्ति मुनयः कमनीयमन्नम् ॥ १२५ ॥

उत्कर्षतः उत्कृष्टात् शिवप्रसादं परिहरन्ति अपकर्षतः निकृष्टाद्वा अत्र च का वासना भवति कस्य प्रयोजनस्य कृते कारणायेति न विद्मः न जानीमः वचनव्यतिरिक्तं किंचिदपि निमित्तं न दृश्यत इत्यर्थः यत् यस्मात्कारणात् मुनयः दीक्षितस्य पतितस्य पतनीयब्रह्महत्यादिपातककारिणश्च कमनीयमन्नं तुल्यरूपं प्रत्यादिशन्ति प्रत्याचक्षते अभोज्यमिति वदन्तीत्यर्थः । तथा च हारीतः । यदन्नं प्रतिलोमस्य शूद्रजस्योत्तमास्त्रियां । महापातकिनश्चैव यदन्नं स्वीकृतं तयोः । अत्र कृच्छ्रं चरेद्भुक्त्वा प्रमादाद्ब्राह्मणस्सकृत् । इति । वर्ज्यान्नो दीक्षितो विप्रैर्यावद्राजपरिक्रिया । इति ॥१२५॥

चण्डालचण्डिलचितानलशौण्डिकानां
गोब्राह्मणज्वलनदीक्षितयोषितां च ।
स्पर्शः कया भवति वासनया निषिद्धः
स्पृष्टेषु वा शिव कया विहिता विशुद्धिः ॥ १२६ ॥

चण्डालचण्डिलचितानलशौण्डिकानां अन्त्यजनापितचिताग्निमद्यविक्रयिणां । समौ चण्डिलनापितौ । इत्यमरः । गोब्राह्मणज्वलनदीक्षितयोषितां च स्पर्शः कया वासनया निषिद्धो भवति एतेषु स्पृष्टेषु कया वासनया विशुद्धिः प्रायश्चित्तं विहितं गोब्राह्मणादीनामकारणस्पर्शो निषिध्यते प्रायेण गुरुशुश्रूषणाद्यर्थेनेति अत्रापि च वचनादृते नान्यत्कारणमस्तीति भावः ॥ १२६ ॥

वर्ज्यान्नमाहुरपि दीक्षितमग्निकल्पं
भोज्मान्नमेव कृतराजपरिक्रयं तं ।
शंखास्थि पावनमपावनमस्थि नृणा-
मित्थं स्थिते वचनमत्र परायणन्नः ॥ १२७ ॥

अग्निकल्पमपि दीक्षितं वर्ज्यान्नमाहुः कृतराजपरिक्रयं कृतसोमवि-
क्रयिणं तं दीक्षितमभोज्यान्नमेवाहुः । तत्र श्रुतिः । कृतराजपरिक्रयो ऽभो-
ऽज्यान्नः । इति । पुराणवचनं च । वर्ज्यान्नो दीक्षितो विप्रैः यावद्राजप-
रिक्रियं । इति शङ्खास्थि पावनं नृणां अस्थि अपावनमाहुः । तत्र स्मृतिः ।
नारं स्पृष्ट्वास्थि सस्नेहे सवासा जलमाविशेत् । इति । इत्थं स्थिते नः अ-
स्माकं वचनमेव परायणं परमकारणं न युक्तिः ॥ १२७ ॥

इदानीं शिवप्रसादव्यतिरिक्तं ब्राह्मणानान्न भोज्यमित्याह—

अब्राह्मणैः क्षुदपघातकमस्तु भोज्यं
यद्देवतान्तरनिवेदितभुक्तमन्नं ।
तद्ब्राह्मणैरपि किमीश्वर वैश्वदेवे
भार्यो बलिर्बलिमतामशितेन तेन ॥ १२८ ॥

देवतान्तरानिवेदितमुक्तं विष्णवादिदेवताभुक्तोंझितं यदन्नं तदब्राह्म-
णैः ब्राह्मणव्यतिरिक्तैः क्षत्रियादिभिः क्षुदपघातकं भोज्यमस्तु तेन अशितेन
विष्ण्वादिदेवताभुक्तोझ्झितेन ब्राह्मणैरपि वैश्वदेवे बलिमतां अग्न्यादीनां ब-
लिर्हार्यः किं दातव्यं नेत्यर्थः ॥ १२८ ॥

अत्रैव मतान्तरमुपाक्षिप्य दूषयति—

देवान्तरैरशितमुक्तमनंगशासि-
न्नश्नन्ति चेदनशितन बलिं हरन्तः ।
आश्यैकदेशविहितो बलिरन्यथास-
न्नालं फलाय विपरीतफलश्च तेषाम् ॥ १२९ ॥

हे अनङ्गशासिन् परमेश्वर अनशितेन देवान्तरभुक्तोझ्झितादन्येन
बलिं हरन्तः बलिहरणं कुर्वन्तः देवान्तरैः विष्ण्वादिदेवान्तरैः आशितमुक्तं



भुक्तोझ्झितं अश्नन्ति चेत् बलिः अश्यैकदेशविहितः आश्यमशनीयमन्नमि-
त्यर्थः तदेकदेशकृतस्सन् एतेषां फलाय नालं न समर्थः किंतु विपरीतफ-
लः आभिचारफलजनकः तदन्त्रतरदेवताभुक्तोझ्झितमन्नं ब्राह्मणाभोज्यमिति
वचनादर्थापत्तिप्रमाणेन । अप्रतिषिद्धमनुमतं । इति न्यायेन महेश्वरप्र-
सादो ब्राह्मणैरेव सकलपापनिर्हरणार्थं ग्राह्य इति भावः अनेन ब्राह्मणै-
श्शिवप्रसाद एव भोक्तव्यः नान्यदेवताप्रसाद इत्युक्तं । तथा च ।
शैवे । शम्भोर्निर्माल्यकं शुद्धं भुञ्जीयात्सर्वतो द्विजः । अन्यदेवस्य निर्मा-
ल्यं भुक्त्वा चान्द्रायणं चरेत् । इति । रुद्रभुक्तं भुञ्जीत । इति श्रुतिसाम-
र्थ्यादीश्वरभुक्तोझ्झितेन तु वैश्वदेवभोजनयोः कर्तव्यतेति हि स्थितं विशेषत-
श्शिष्टैर्ब्राह्मणैरेव शिवप्रसादभोक्तव्यत्वे जाबालीया श्रुतिः । रुद्रेण भुक्त-
मश्नन्ति रुद्रेण पीतं पिबन्ति रुद्रेणाघ्रातं जिघ्रन्ति । तस्माद्ब्राह्मणाः प्रशा-
न्तमनसो विद्वांसो निर्माल्यमेव भक्षयन्ति निर्माल्यमेव निषेवेत निर्माल्यमे-
वाश्नीयादिति । तथा च स्कान्दे । शिष्टाश्शान्ताश्च रुद्रेण भुक्तमेव हि
भुंजते । घ्रातमेव हि जिघ्रंति पीतमेव पिबन्ति च । शिवप्रसादस्य ब्राह्मणै-
रेव भोक्तव्यत्वमकरणे प्रत्यवायं चाह । कठश्रुतिः । त्रिगुप्सातमश्नीयाद्यदि
पाप्मन् शिवे नार्पितं भुंक्ष्व तदेनो भुंक्ष्व कृमिं भुंक्ष्वाधो गच्छेत् । इति । अ-
स्यार्थः । त्रिगुरुति त्रिस्रः गावः यस्येति त्रिगुः अत्र गोशब्देन चक्षुरिंद्रि-
यमुच्यते त्र्यंबक इत्यर्थः तेन त्रिगुणा प्सातं प्सा भक्षणे प्साधातोः कर्म-
णि निष्ठा ततः प्सातन्त्र्यंबकेन भक्षितं अश्नीयात् भुंजीयात् हे पाप्मन् शि-
वे नार्पितं यदि भुंक्ष्व यद्यश्नीयाः तत्कारणादेनो भुंक्ष्व एनश्शब्देन महापा-
तकिनो यत् फलं शिवानर्पितभोजने भवतीति तात्पर्यं क्रिमिं भुंक्ष्व अत्रं
भुंक्ष्व कृमिभक्षणे अघभक्षणे यदुपपादकं तत्फलं च शिवे नार्पितभोजने भ-
वतीति अधोगच्छेति वीप्सायां अधो गच्छ नरकं गच्छ पुनः पुनः सर्वका-
लं नरकपाती भवेत्यर्थः । तथाचपाप्मवचनं । असमर्प्यौदनं शंभोर्भुक्ते
खादति पाति चेत् । श्वमांसमस्थि मूत्रं च भुङ्क्तेखादति पाति च । निर्वि-

कल्पधिया शंभोर्भुक्तोच्छिष्टान्नपानकं । योभुङ्क्ते स गणाधीशो यावज्जीवं प्रतिज्ञया । इति ॥ १२९ ॥

इदानीमीश्वरस्य ब्रह्महनननिमित्तं भिक्षाटनमिति भ्रान्तिनिवृत्यर्थं ब्रह्महननाभावं प्रतिपादयति—

**ब्रह्माणमीश्वर पुरा हतवानसीति**
**भिक्षाटनं विमृशतः प्रतिभानमात्रं ।**
**यत्पंचमे शिरसि पुष्पसमं निकृत्ते**
**जीवंतमेनममितायुषमाहुराप्ताः ॥ १३० ॥**

हे ईश्वर ब्रह्माणं पुरा हतवानसीति भिक्षाटनं विमृशतः पर्यालोचयतः पुरुषस्य प्रतिभानमात्रं यत् यस्मात्कारणात् पञ्चमे शिरसि पुष्पसमं यथा भवति तथा निकृत्ते छिन्ने सति जीवन्तमेनममितायुषं आप्ता आहुः तस्मिन्मृते खलु तद्धननप्रायश्चित्तततया भिक्षाटनं स तु न मृतः अतो न तद्धनननिमित्तं भिक्षाटनं किंतु लीलैवेति भावः ॥ १३० ॥

ब्रह्मघ्नो वसनं शाणं कपालशकलं करे । केतुयष्टौ शवशिरो भैक्षं सप्तनिकेतनं । इति स्मृत्युक्तप्रायश्चित्तव्रतलक्षणानां कात्स्न्र्येनादर्शनाच्च न ब्रह्मवधनिमित्तं भिक्षाटनमित्याह—

**आनाभिजानु वसितं वसनं न शाणं**
**पाणौ कपालशकलं न विलोकितं ते ।**
**नालंबते शवशिरस्तव केतुयष्टौ**
**भैक्षं न साप्तभवनं सकलं तदास्ताम् ॥ १३१ ॥**

आनाभिजानु नाभिमारभ्य जानुपर्यन्तं शाणं वसनं न वसितं न परिहितं ते पाणौ कपालशकलं न विलोकितं न दृष्टं श्रुत्या न श्रुतमित्यर्थः तव केतुयष्टौ ध्वजदण्डे शवशिरो नालम्बते न सज्जते साप्तभवनं सप्तभवनेषु क्रियत इति । शेषे । इत्यण् भैक्षं भिक्षासमूहः । तस्य समूहे । इत्यण् ब्रह्मघ्नो वसनं । इत्यादि स्मृतिकथितं लक्षणं कात्स्न्र्येन न विद्यते तत्सकलमास्तां लोके वेदविरुद्धब्रह्मवधतत्प्रायश्चित्तव्रतसकललक्षणाङ्गीकारेऽपि नेश्वरस्य प्रत्यवाय इति भावः ॥ १३१ ॥

(क्रमशः)

॥ श्रुतिसूक्तिमाला ॥

( पूर्वप्रकाशितात्परम् )

अहं ते स्तोत्रीयं स्तोत्राय हितं । तस्मै हितं इतिछः । अर्थं त्वत्प्रतिपादकश्रुतिपुराणवचनार्थं उपपादितवान् हे भक्तवत्सल शिखी शिखावान् शुचिनाम्बरेण उपलक्षितः धृतत्रिपुण्ड्रः यज्ञोपवीतमुपवीय उपवीतं कृत्वा भक्त इति भाषमाणः आविर्बभूविथ कृतस्मरणे लिट् प्रादुर्भूतः किलासीः इत्यर्थः ॥ १४८ ॥

प्रसन्नस्य भूतपतेः प्रसादं स्वीकृतवतः आत्मनः तत्स्वीकरणञ्चाह—

भक्तं भवानदित पार्श्वचरोपनीतं
मह्यं महेश्वर पयश्श्रपितं प्रसन्नम् ।
**भुञ्जान एव तदहं झडितिप्रबुद्ध**
**स्वप्नस्समाधिरिति युक्तधियामभिन्नः ॥ १४९ ॥**

हेमहेश्वर पार्श्वचरोपनीतं भवत्पार्श्वचरेणानीतं पयश्श्रपितं पयःपक्वं पायसं भवानदित दत्तवान् तद्भक्तमहं भुञ्जान एव झटिति प्रबुद्धः स्वप्नोत्थितएव प्रसादं स्वीकृतवानस्मि स्वप्नलब्धस्य पायसस्य कथं प्रबुद्धेन स्वीकार इत्यत आह स्वप्न इति युक्तधियां योगिनां स्वप्नस्समाधिरिति अभिन्नमेकरूपं यथा समाधिलब्धस्य न मिथ्यात्वं तथा स्वप्नलब्धस्यापीत्यर्थः ॥ १४९ ॥

एतत्स्तोत्राध्ययनफलमाह—

**स्तोत्रमेतदवधाय गृह्णतामर्थमस्य निखिलेन जानताम् ।**
**ग्राह्यमन्यदपि नावशिष्यते ज्ञेयमन्यदपि वा न किञ्चन ॥ १५० ॥**

अवधाय समाहितचित्ततयावस्थाय एतत्स्तोत्रं गृह्णतां पठतां तस्य स्तोत्रस्य निखिलेन साकल्येनार्थं जानतां पुंसामन्यद्ग्राह्यमपि नावशिष्यते पठनीयमन्यन्नास्ति अन्यदर्थं ज्ञेयमपि वा किञ्चन नास्ति सर्वमप्यधीतञ्च भवतीत्यर्थः ॥ १५० ॥

श्रुतिसूक्तिमालापरिमाणोक्तिपूर्वकं स्तोत्राध्ययनस्य फलान्तराण्याह—

**पञ्चाशदुत्तरशता श्रुतिसूक्तिमाला**
**भोगावळी भुजगराजमनोहरा ते ।**

वेदेषु भक्तिमपरागमवैदिकेषु
तन्त्रेषु भक्तिमतुलां त्वयि च प्रसूते ॥ १२१ ॥

पञ्चाशदुत्तरंशतंश्लोकशतं यस्यास्सा पञ्चाशदुत्तरशता भुजराजमनोहरा भोगावळी कीर्तिपरंपरा ते श्रुतिसूक्तिमाला श्रुतयो वेदा एव कल्पद्रुमास्तेषां सूक्तय एव कुसुमानि तैर्ग्रथिता माला वेदेषु भक्तिं साङ्गेषु आदरातिशयं अवैदिकेषु सिद्धान्तेषु अपरागं अस्नेहं त्वयि अतुलां च भक्तिं संप्रसूते जनयति ॥ १५१ ॥

॥ समाप्ता श्रुतिसूक्तिमाला ॥

---

मिथ्याकल्पितभोगमोक्षदवचस्सन्तानसत्वापन
व्यग्राणामचिरप्रभावविबुधप्रेम्णा महेशद्विषाम् ।
मूर्ध्निष्वेकदुरात्मनां विरचिता निर्घातवाताः परै-
र्विद्वद्भिः परमेश्वरश्रुतिकथातात्पर्यसङ्ग्राहकैः ॥
तत्वप्रकाशिका व्याख्या शिवलिङ्गभूभुजा रचिता ।
प्रख्यातमेवभक्तिः पुरहरपादाम्बुजार्पिता सततम् ॥
अघटितघटनापटवे प्रकटितकरुणाय गगनसिन्धुभृमे ।
वटतरुमूलावस्थितये विघटिततमसे महेश्वराय नमः ॥
॥ समाप्ता चतुर्वेदतात्पर्यसङ्ग्रहाख्या व्याख्या ॥
सर्वं साम्बशिवार्पणमस्तु ॥
ओंतत्सत् ॥
सर्वं शिवम् ॥

---



श्रीः

# सन्ध्यावन्दनक्रमः ।

---

इह खलु भूमण्डलेऽवश्यमनुष्ठेयं कर्मास्माभिः । तच्च फलप्राप्तिनिरपेक्षमिति सर्ववेदान्तसम्मतम् । फलप्राप्तिश्च कर्मणा भवतीति श्रूयते । 'ज्योतिष्टोमेन स्वर्गकामो यजेत'इतिविधिना स्वर्गकामस्य ज्योतिष्टोमेन स्वर्गसुखं भवति । किञ्च स्वर्गे लोके कामधुग्भवति' इति श्रुत्या कस्यचित्कर्मणः कृतस्य कामदोहनं फलमुक्तम् । किञ्च कस्यचित् कर्मणः "चन्द्रमसस्सायुज्यं गच्छति,, इति चन्द्रसायुज्यं फलत्वेन प्रतिपादितम् । कास्मिंश्चिद्याग यजमानस्य स्वर्गारोहणमेव फलमित्यनुष्ठीयते च स्वर्गारोहणम् । एवञ्च कर्मणा न मोक्षः इति सिद्धे श्रुतिरपि द्रढयति । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वामानशुः' इति । अपिच 'प्लवा ह्येते अदृढाः' इति श्रुतिरपि कर्मरूपप्लवमदृढमाह । किञ्च श्रुतिः 'यथेह कर्मचितो लोकः क्षीयते तथामुत्रपुण्यकृतो लोकः क्षीयते' इति कर्मणा लब्धः क्षीणो भवतीत्यपि ज्ञायते । अत्र च स्मृतयोप्यनुकूलाः । "क्षीणे पुण्ये मर्त्यलोकं विशन्ति । कर्मणा न हि मोक्षस्स्यात् ज्ञानेनैव भवेद्धि तत् " इति पुराणवचनम् । विस्तरभिया बहूनीह प्रमाणवचनानि नोदाह्रियन्ते । तस्मादादौ यदुक्तं कर्मणा फलप्राप्तिर्भवतीति । सा च कर्मक्षयरूपिणी । तथाच कर्मक्षयस्य फलत्वेनानुभूतत्वात् नश्यति कर्म। तत एवाभियुक्ताः । (श्लो)'पुण्यकर्मविभवव्ययलब्धास्सम्पदो विपद एव विमृष्टाः' इति जन्मान्तरानुष्ठितकर्मफलरूपत्वं सम्पद आहुः। तस्मात् किमस्माक कर्मणा बन्धरूपेणेति प्राप्ते समाहितिरिहोच्यते । श्रुतिः 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतम् समाः । एवम् त्वयि नान्यथेतोऽस्ति न कर्मलिप्यते नरे' किञ्च 'न कर्मणालिप्यते पापकेन' (श्लो) "नलिप्यते कर्मणायम् पद्मपत्रमिवा-

म्भसा । सुकृतंदुष्कृतश्चापि त्यक्त्वाप्नोति परं पदम् ।' इति स्मृतिरप्यस्माकमनुकूला । गीतायाश्च । "कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।' किञ्च । 'कर्म ज्यायो ह्यकर्मणः' इति श्रूयते । साक्षादन्यत्र। उपनयनसमये । 'अपोशान 'कर्म कुरु-मा सुषुप्थाः" इत्यादि । तस्मात् कर्मावश्यमनुष्ठेयम् । पूर्वप्रतिपादितश्रुतीनाञ्च तु न कर्माननुष्ठाने तात्पर्यम् । अपि तु कर्मफलत्यागे । अत एव गीतायाम् "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।" इत्यादीनि कर्मानुष्ठापकानि कर्मफलप्राप्त्यनाशंसाप्रतिपादकानि बहूनि वचनानि दृश्यन्ते । ग्रन्थविस्तरभिया तानीह न लिख्यन्ते । एवञ्च । "कर्मावश्यमनुष्ठेयम् । तच्च फलप्राप्तिनिरपेक्षमिति सर्ववेदान्तसम्मतामिति' यदुक्तं तत्सिद्धम् ।

इदमिदानीमुच्यते । सन्ति च बहूनि कर्माणि । तेषु च मुख्यं सन्ध्यावन्दनम् । तथा च श्रूयते "अहरहःसन्ध्यामुपासीत' इति । अहरहरिति वीप्साश्रवणात् यावज्जीवानुष्ठेयता सिद्धा । 'एकाहं जपहीनस्तु संध्याहीनोदिनत्रयं । द्वादशाहमनग्निस्याच्छूद्र एव न संशयः" इतिस्मृत्या प्रत्यवायदर्शनात् इदं कर्मनित्यं । मनुरपि "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इत्याह । तस्मात् संध्यावंदनस्य श्रुतिविहितस्याननुष्ठाने महान् श्रुतिप्रकोपः पातित्यञ्च भवेदिति सिद्धं ।

अथ संध्यावंदनानुष्ठानप्रकारः । स्नात्वा यथाविधि धृत्वाशुष्कवस्त्रे, कृत्वापुण्ड्रं यथामतं, प्रक्षाल्य पादौ, आचम्य च, आरभेत कर्म। तत्राचमनमन्त्रः । "अच्युतायनमः, अनन्तायनमः, गोविन्दायनमः," इति । पश्चाच्च केशवादिनामभिः तालुप्रभृतिस्थानानि स्पृश्यन्ते । अत्रायमभिप्रायः । संध्यावंदनस्य मुख्यफलं तु ब्रह्मानुसंधानमेव । तच्चाग्रे "असावादित्योब्रह्म" इति मन्त्रे स्फुटी



भविष्यति । ततः "अप्रमत्तस्यैव ब्रह्मानुसंन्धानं भवती'ति मत्वा पूर्वकलाप इहाक्रियते । अत्र चाचमने क्रियमाणे अन्तर्मन्त्रपूतजलसेकेनान्तःकरणशुद्धिः । ततश्च सर्वनाडीनां जाड्याभावः । बहिरिन्द्रियाणां सजलांगुलिस्पर्शेन सर्वेषामुज्जीवनं । रात्रावशुद्धानामिन्द्रियाणां शुद्धिश्च भवति । किंचेदं रहस्यं । इन्द्रियाणि तु सर्वाणि स्वेषु स्वेषु विषयेषु यथा बलं सञ्चरन्ति । तानि बुद्धिमानपि नरः ततोपकृष्य, ब्रह्मणि स्थापयितुं न शक्नोति । यथा कश्चित्सारथिस्समर्थोऽपि यथाबलं उत्पथप्रवृत्तेष्वश्वेषु तान्निवारयितुं न शक्नोति । तथा तत्र लघुभूत उपाय आश्रयणीयः । स चायमुच्यते । कुत्रचिद्विविक्ते स्थित्वा इन्द्रियाणि निरुध्यात्मानं विभावयेत् । तच्चेन्द्रियनिरोधनमवश्यमनेन कर्मणा भवेत् बहुभिरहोभिः । कथमितिचेत् । "अच्युतायनमः' इत्युक्ते कोत्रास्यार्थ इति बुद्धिमता चिन्तिते । 'यन्नच्युतं भवति सत्यरूपेणावस्थितं तदेवास्यार्थः, इतिज्ञायते । 'अनन्तायनमः' इत्युक्ते यस्यान्तो न विद्यते । 'सत्यंज्ञानमनन्तं ब्रह्म' इति श्रुत्या तदेव ब्रह्मानन्तशब्देनोच्यते । 'गोविंदायनमः' इति मन्त्रेण गोशब्दस्य भूमिवाचकत्वात् 'गोविन्दता भगवता गोविन्देन महात्मना' इति महाभारतवचनेन प्रळयानन्तरकाले भूम्युद्धारको भगवानेवोच्यते । अतएव श्रुतिरपि । 'उद्धृतासि वराहेण कृष्णेनशतबाहुना' इत्याह । तस्मात् 'अयमपिशब्दः नारायणाख्यं परंब्रह्मैवाह' इति ज्ञातेसति अस्य सर्वविषयनिवृत्तिपूर्वकं ब्रह्मध्यानमेव रोचते । ततश्च इन्द्रियाणि मन्दं मन्दं स्वविषयाद्बलात्प्रतिनिवर्त्यमानानि दिने दिने किञ्चित् किञ्चित् स्वायत्तानि भवन्ति । ततश्चायं स्थिरधीर्भवति । ततश्च वश्येन्द्रियोऽयं ब्रह्माभिसंधातुं प्रवर्तते । तदानीं तस्य सर्वेन्द्रियाणि सदश्वास्सारथेरिव वश्यानि भवन्ति । अनेनाचमनस्यफलमुक्तं । इन्द्रियस्पर्शेन इन्द्रियनिरोधस्य लक्ष्यमाणत्वात् । ततश्च प्रकृतमनुसरामः ।

विघ्ननिवृत्त्यर्थं केचिद्विघ्नेशप्रार्थनां कुर्वते । युक्तश्चैतत् । "श्रेयांसि बहुविघ्नानि ' इत्युक्तेः । ततश्च प्राणायामः ओंभूरित्यादिभूर्भुवस्सुवरित्यन्तेन मन्त्रेण क्रियते। सच पूरक कुंभक रेचकभेदेन त्रेधा भवति। आकृष्य वायुमेकेन नासापुटेन,ध्यायन् ब्रह्माणं,अनन्तर मुदरेप्रवेशयन्, ध्यायन्नारायणं एकेन नासापुटेन ध्यायन् शंभुं, विसृजेत् ' इति प्राणायामक्रमः । अस्यचार्थः । भूरादिसर्वलोकाः प्रणववाच्यब्रह्मरूपा इति । ततः ' ममोपात्तेति मन्त्रः । तस्य च सकलपापनिवृत्तिपूर्वकभगवत्प्रसाद एव-फलं संध्यावन्दनस्य ' इत्यर्थः । एतेन क्वचिन्नित्यानामपि कर्मणां फलप्राप्तिरस्तीति प्रतीयते । तथा च श्रुतिः । "पाप्मानमवधून्वन्ति । सकलं भद्रमश्नुते । ब्रह्माप्येति ' इति । अनन्तरं 'श्री केशवाय नमः' इतिसवारीणांगुळिना ललाटं स्पृशन्ति केचित् । अन्येतन्नाचरन्ति । अथ आपोहिष्ठेति ' मन्त्रः । अस्यचार्थः हेआपः! यूयं मयोभुवस्स्थ हि । मयश्शब्दस्य सुखवाचकत्वस्य ' मयोभुवेचेत्यादिश्रुतौ प्रसिद्धत्वात् । सुखप्राप्तिहेतुभूता भवथ इत्यर्थः । सुखश्चात्र जलस्य आप्यायनहेतुभूतत्वा दापाततः प्रतीयते । वस्तुतस्तु , ' यस्य पृथिवीशरीरं यस्यापश्शरीरं ' इत्यादिश्रुतौ ब्रह्मणस्सर्वशरीरित्वश्रवणात् अत्र तदन्तर्यामी परमात्मा प्रार्थ्यते । एवमेव सर्वमन्त्राणामर्थो वाच्यः । 'नामरूपे व्याकरवाणि' इति श्रुतिश्चेह प्रमाणं । परमात्मानस्तु परमानन्दरूपत्वं प्रसिद्धमेव । किञ्च ब्रह्मानन्दादन्यच्च न सुखशब्दवाच्यतामर्हति । कुत इति चेत् तैत्तिरीयोपनिषदि आनन्दवल्यां मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमेकैकस्माच्छतगुणितमुक्त्वा परानन्दं वक्तुमिदन्तयाऽशक्ताश्रुतिराह 'यतो वाचो निवर्तन्ते ' इति । तस्मात् 'ब्रह्मानन्द एव परमसुखं ' इति सिद्धं । तादृश सुखभूमयः यूयं स्थ । इति यावत् ।

क्रमशः

## सन्ध्यावन्दनक्रमः ॥

(पूर्वप्रकाशितात्परं)

---

सर्वेषामपि मन्त्राणामृषिच्छन्दोदेवतोच्चारणपूर्वकमेवानुष्ठानदर्शनाच्छास्त्रनियमाच्च । अस्य प्रणवाख्यस्य महामनोः परब्रह्मवाचकस्य ऋष्यादिकमाह–प्रणवस्येति । प्रणवस्य ऋषिर्ब्रह्मा देवीगायत्रीच्छन्दः परमात्मा देवता । अस्य प्रणवस्य निर्वचनमथर्वशिरसि श्रूयते । यथा ॥ श्रु ॥ अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋचो यजूंषि सामानि अथर्वांगिरसश्च यज्ञ ब्रह्मच ब्राह्मणेभ्यः प्रणामयति तस्मादुच्यते प्रणवः इति । अथर्वशिखायान्तु । श्रु । प्राणान् सर्वान् परमात्मनि प्रणामयति नामयतीत्येतस्मात् प्रणवश्चतुर्धावस्थितइति । अस्य प्रणवस्य तारकमित्यपि नाम वर्तते । तदाश्रित्य अथर्वशिखायां निर्वचनं कृतम् । श्रु । सर्वेभ्यो दुःखभयेभ्यस्संतारयतीति । तारणात्तारः इति । छान्दोग्ये च । श्रु । ओमित्येतदक्षरमुद्गीथमुपासीत । ओमित्युद्गायति तस्योपव्याख्यानमित्युक्त्वा, एषां भूतानां पृथिवी रसः । पृथिव्या आपो रसः अपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाचोरसः वाचऋग्रसः ऋचस्साम रसः साम्नउद्गीथो रसः सएष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथ इति । प्रणवस्य रसतमत्वं प्रतिपादितं । किञ्च परस्य ब्रह्मणः सत्स्वपि बहुषु नामसु इदमेव प्रणवाख्यं नाम श्रेष्ठतमं भवति । यथा कश्चित् लोके स्वस्य नाम्नि साधारणे सत्यपि स्वीयाधिपत्यवैदुष्यश्रैष्ठ्यादिभिः प्राप्ते नाम्नि केनचिदुच्यमानेऽधिकं सन्तुष्यति, त्वरिततरमाभिमुखीभवतिच, तथा भगवानपि श्रीमन्नारायणः बहुश्रुतीतिहासपुराणादिषु स्ववाचकतया प्रतिपादितवेदादिभूतप्रणवश्रवणेनाभिमुखीभवतीति हृदयं । भगवत्पादैरपि पूर्वोक्तछान्दोग्यव्याख्या-

ने पुराणस्य परमात्ममुख्यवाचकत्वमुक्तं । तथा हि । छा ॥ श ॥ भा । ओमित्यक्षरमुपासीत । ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठं । तस्मिन् हि प्रयुज्यमाने सप्रसीदति प्रियनामग्रहणइव लोकः इत्युक्त्वा ओमित्येतदर्चादिवत् परमात्मनः प्रतीकं संपद्यते इत्युक्तं । एवं ओंकारस्य परब्रह्मवाचकत्वं स्फुटं । श्रुतौ च तैत्तिरीयाणां श्रु ॥ योवेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परस्समहेश्वरः इति ॥ वेदादिस्थितस्वरस्य प्रणवस्य अर्थः परमात्मा श्रीमन्नारायणः प्रतिपादितः । तैत्तिरीयोपनिषदि प्रथमप्रश्ने ओमिति ब्रह्म इत्यारभ्य ब्रह्मैवोपाप्नोतीत्यन्तेन सन्दर्भेण इदमेव प्रतिपादितं ॥ गीतायांच । ओं–तत्–सत् इति ब्रह्मणस्त्रिविधोयन्निर्देश इति स्थितं । एवं च सर्वप्रमाणैः प्रणवस्य ब्रह्मवाचकत्वं सिद्धं । अत्र च अकारः उकारः मकारश्च घटकावर्णाः । तेषामपि देवतादिकं स्वरूपञ्च शिखाश्रुतौ प्रत्यपादि ॥ श्रुओमित्येतदक्षरमादौ प्रयुक्तं ध्यानन्ध्यायितव्यमित्येतदक्षरं परंब्रह्मास्य पादाश्चत्वारः ! पूर्वास्यमात्रा पृथिव्यकारस्सऋग्भिर्ऋग्वेदः ब्रह्मा वसवो गायत्री गार्हपत्योद्वितीयान्तरिक्षम् । सउकारस्सयजुर्भिर्यजुर्वेदः । विष्णुरुद्रास्त्रिष्टुप् दक्षिणाग्निः तृतीया द्यौस्समकारः सासामभिस्सामवेदः रुद्रआदित्या जगत्याहवनीयो यावसानेऽस्य चतुर्थ्यर्धमात्रा सासोमलोक ओंकारस्साथर्वणैः मन्त्रैरथर्ववेदस्संवर्तकोऽग्निर्मरुतोविराट् । एकर्षिर्भास्वती स्मृता प्रथमा रक्तपीता महद्ब्रह्मदैवत्या द्वितीया विद्युमती कृष्णा विष्णुदैवत्या तृतीया शुभा शुभा शुक्ला रुद्रदैवत्या । यावसानेस्य चतुर्थ्यर्द्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्या सएषह्योङ्कारः चतुरक्षरः चतुष्पादः चतुश्शिरः चतुस्स्वरः चतुरर्धमात्रा–स्थूलमेतद्धृस्वदीर्घप्लुतमित्योमिति ॥ अत्र प्रणवे चतुर्थी अर्धमात्रा वर्तते अकारोकारमकारानन्तरम् । तस्यास्तुरीयं अपहतपाप्मत्वादिलक्षणं पुरुषशब्दवाच्यं जगज्जन्मादिकारणभूतं पुरुषसूक्तादिमहोपनिषत्प्रतिपादितम् सच्चिदानन्दात्मकं परं ब्रह्म श्रीमन्नारायणो वाच्यं भवति । एतदेव महद्रहस्यं ॥ अत्र श्रुतौ शैववैष्णवाद्वैतिनो मिथो विवदन्ते । नात्रानुपयोगाद्ग्रन्थविस्तरभियाच तान्लिख्यते ॥ इति प्रणवस्यार्थोऽभिहितः । तस्य ऋषिः । प्रथमद्रष्टा ब्रह्मा चतुर्मुखः । देवी गायत्री च्छन्दः । परमात्माचोपास्यदेवता । इति फलितं ॥ भूरादिसप्तव्याहृतीनामित्यादि विश्वेदेवा देवता इत्यन्तस्य सन्दर्भस्यार्थस्सुगमः ततः प्राणायामं कुर्यात् । तस्य लक्षणं प्राङ्न्यरूपि । विस्तरस्त्वन्यत्रावगन्तव्यः । यथोक्तलक्षणप्राणायामं कर्तुमशक्तः ओंभूरित्यादिभूर्भुवस्सुवरोमित्यन्तं मन्त्रं दशवारं जपेत् । इत्युक्तं । एतदेव महद्भिरनुष्ठीयते । ततः–आयात्वितिमन्त्रः । आयातु वरदादेवी अक्षरं ब्रह्म सम्मितं । गायत्री छन्दसां माता इदं ब्रह्म जुषस्वनः । केचित् देव्यक्षरं जुषस्व मे इति पठन्ति । ओजोऽसि सहोऽसि बलमासि भ्राजोसि देवानां धामनामासि विश्वमसि विश्वायुस्सर्वमासि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि ॥ अस्यानुवाकस्यार्थो लिख्यते ॥ वरदा भक्तेभ्योऽभीष्टानि ददती देवी द्योतमाना ज्योतीरूपेण प्रकाशमानेति यावत् । अक्षरं नाशरहितं नक्षरतीति व्युत्पत्तिः । अथवा सर्वमश्नुत इति । अक्षरं सर्वव्यापकामित्यर्थः । सम्मितं । सम्यक् मितं । अवगतं । ब्रह्मनिष्ठैः आत्मैकवेद्यतया ज्ञातमित्यर्थः । अथवाभावेक्तः संमितं ज्ञानस्वभावामित्यर्थः ब्रह्म अपरिच्छिन्नमित्यर्थः । बृहिवृद्धाविति धातोरूपं । एतादृशब्रह्मरूपिणी गायत्री आयात्वित्यर्थः ॥ गायत्री ॥ प्रथमार्थे द्वितीया । स्वमनुजपकनिष्ठत्राणशीला छन्दसां माता वेदानां प्रसूः । उष्णिगादिछन्दसां च माता । अत एवापस्तम्ब आह । सर्वेभ्यो वेदेभ्य स्सावित्र्यनूच्यत इति हि ब्राह्मणमिति । तथाभूता त्वं । इदं पूर्वोक्तमखण्डानन्दभूतं ब्रह्म । नः अस्माकम् । जुषस्व सेवय । अन्त-

भीत्रितणिरयं ॥ जुषीप्रीतिसेवनयोरिति धातुः । अस्मान् ब्रह्मैकशरण्याङ्कुर्वितिफलितं । अन्येतु–इदं ब्रह्म। स्तोत्ररूपं । वेदं जुषस्व गृहाण । इति व्याचख्युः । तन्मते ब्रह्मशब्दस्य वेद इत्यर्थः । किश्च । इदं गायत्र्यात्मकं परं ब्रह्म स्तूयते । ओजोऽसि हे गायत्रीत्यध्याहारः । त्वं त्वदाश्रितेभ्योऽस्मभ्यं । ओजोऽसि ॥ तेजोऽसि । ब्राह्मणानां ब्रह्मतेज इति यदुच्यते तत् त्वमेवेत्यर्थः । किश्च ॥ श्लो ॥ यदादित्यगतं तेजो जगद्भासयतेऽखिलं । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धिमामकामिति भगवदुक्तेः ॥ इदानीं भगवद्रूपेण स्तूयमानाया गायत्र्या स्तेजोरूपत्वं प्रसिद्धमेव । सहोऽसि कल्पान्तकाले भगवतस्सर्वसंहर्तृत्वदर्शनात् सर्वपराभवशक्तिरसीति स्तूयते । एतेन सहश्शब्दस्स पराभवशक्तिरित्यर्थः बलमसि ॥ यत्नंविना अङ्गुल्यग्रादिना महागिर्युद्धरणादिशक्तिः बलशब्देनोच्यते तादृशं बलमसि । भ्राजोऽसि दीप्तिरसि । वज्रादौ तारल्यमिव तत्र तत कान्तिरूपेण वर्तस इत्यर्थः ॥ देवानां । इन्द्रादीनां । धाम । वासस्थानमसीत्युक्तिरुपलक्षणं । सर्वेषां स्थानमसीत्यर्थः ॥ नामासि ॥ सर्वपदार्थवाचकशब्दराशिस्त्वमिति तात्पर्यं ॥ बहुधा परमात्मानं गायत्रीं स्तोतुमशक्ता श्रुतिरुपसंहरति । विश्वमसीत्यादिना ॥ विश्वमस्मदृष्टिबुद्धिगोचरीभूतं प्रपश्चजातं । त्वमसि । विश्वायुः । तेषामायुश्च त्वमसि । सर्वजीवनहेतुत्वात्परमात्मनः । तथाच । श्रु । ते । कोह्येवान्यात् कःप्राण्यात् । यदेष आकाश आनन्दोनस्यादिति श्रुतेः ॥ सर्वं ॥ असि ॥ अस्मदृष्टिबुद्ध्याद्यगोचरीभूतं सर्गान्तरसृष्ट्यादिकं । तच्चं । सर्वायुः । अनुपदप्रतिपादितस्यायुश्च त्वमसीति सम्बन्धः । अभिभूरों गायत्रीमावाहयामि सावित्रीमित्यादि ॥ अर्थः । अभिभूः सर्वाभिभवनशक्तिः सर्वतेजसामभिभविता भानुमानिव सर्वसर्गाभिभवितायमिति भावः ॥ ओं ॥ प्रणवार्थश्चासि अथवा । गायत्र्यावाहने । आदौ । ओंगायत्रीमावाहयामीति समन्वध्यते । गायत्रीमावाहयामि गायत्र्यात्मकं परं ब्रह्म सोऽहमिति ममात्मतया प्रापयामीत्यर्थः—अथ ऋष्यादिन्यासः । सावित्र्या ऋषिर्विश्वामित्रः । गायत्री छन्दः सविता देवता ॥ तथाच छन्दोरत्ने ॥ छन्दोगायत्री सविताचैव देवता ॥ श्लो ॥ मुखमग्निस्त्रिपाचैव विश्वामित्र ऋषिस्तथा । त्रयीशिरश्शिखारुद्रोविष्णुर्हृदयमेवच । उपासनेविनियोगस्सांख्यायनगोत्रिका । त्रैलोक्यं चरणं ज्ञेयं पृथिवीकुक्षिरेवच । एवं ध्यात्वातु गायत्रीं जपेद्द्वादशलक्षणामिति । तत्सवितुरित्यत्र तकारादिवर्णानां प्रत्येकं देवतादिकं वर्तते । ग्रन्थविस्तरभिया नातीव उपयुज्यत इति च नेहतत् ॥ ध्यानं ॥ श्लो ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैः मुखैस्त्रीक्षणैः युक्तामिन्दुनिबद्धरत्नमकुटां तत्वार्थवर्णात्मिकां । गायत्रीं वरदाभयां कुशकशाःशुभ्रं कपालं गुणं शङ्खं चक्रमथारविन्दयुगळं हस्तैर्वहन्तीं भजे ॥ इति ॥ अथ गायत्रीजपप्रकारः । गायत्रीचेत्थंजप्या । ओं । भूर्भुवस्सुवः । तत्सवितुर्वरेण्यं । भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयादिति । आदौ प्रणवः । ततः । व्याहृतिः । ततस्तत्सवितुरित्युच्चारयेदिति स्मृतिभिरुक्तं । अत्रकेचिद्योगयाज्ञवल्क्यादयः । आद्यन्तप्रणवयुक्तां गायत्रीं जपेदिति वदन्ति । अन्येतु, · प्रत्येकं । व्याहृतीनामेकमेकं प्रणवमुच्चार्य प्रतिपादश्च गायत्र्याः प्रणवमेकमुच्चार्य षडोङ्कारां गायत्रीं जपेदित्याहुः । तत्सर्वं गृहस्थब्रह्मचारिव्यतिरिक्तविषयमिति स्मृतिरत्नावळ्यामुक्तम् । तथाहि ॥ श्लो ॥ सम्पुटैकाषडोङ्कारा गायत्री त्रिविधामता । तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि ॥ गृहस्थवत्तुजप्तव्या सदैव ब्रह्मचारिभिः । संपुटाच षडोङ्कारा भवेतामूर्ध्वरेतसाम् ॥ संपुटा । आद्यन्तप्रणवयुक्ता । एका एकप्रणवयुक्ता षडोङ्कारातु पूर्वोक्तैव । किश्च स्मृतिसारसमुच्चये–गृहस्थो ब्रह्मचारीच प्रणवाद्यामिमां जपेत् । अन्तेयः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् । तत्रैव । सोङ्कारा चतुरावृत्त्या विज्ञेयाच शताक्षरा—शताक्षरां स·

माहत्य सर्ववेदफलं लभेत् । एतया ज्ञातया नित्यं वाङ्मयं विदितं भवेत् उपासितं भवेत्तेनविश्वम्भुवनसप्तकमिति । गायत्र्येव इह शताक्षरेत्युच्यते चतुरावृत्या । तथाहि गायत्र्याश्चतुर्विंशत्यक्षरवत्वात् प्रणवेन सह एकस्यामावृत्तौ पञ्चविंशत्यक्षरवत्वं भवति । एवं चतुरावृत्या गायत्री शताक्षरा संपद्यते । यद्यपि व्याहृतिसम्मेळनेन द्वादशाक्षराणामाधिक्यं भवति । तथापि तन्नात्रविवक्ष्यतेऽक्षरसंख्यायां जपस्त्ववश्यङ्कार्यएव व्याहृतीनामपि । इतिस्मृतेरभिप्रायः । तथास्माभिः गृहस्थैः ब्रह्मचारिभिश्च एकप्रणवैव गायत्री जप्येति निष्कर्षः । अन्यच्च । प्रतिपादं विच्छिन्नपादामेव गायत्रीं जपेदिति नियमः । सैव गायत्री मोक्षप्रदा । अविच्छिन्नपादां नजपेत् । अविच्छिन्नपादातु गायत्री नरकप्रदा । अत्र स्मृतयः प्रमाणभूतास्सन्ति । लिख्यन्ते नात्र विस्तरभिया । अथ जपयज्ञोयं त्रिविधो मतः । वाचिकः, उपांशुः , मानसश्चेति ॥ एषु पूर्वस्मात्पूर्वस्मादुत्तरोत्तरश्रेयान् । एतेषां लक्षणन्तु । स्पष्टाक्षरं स्पष्टपदं आरोहावरोहस्वरयुक्तं वाचा निकटस्थश्रोत्रगामिनामिव यन्मन्त्रं जपेत् । सवाचिकः । तथाऽकुर्वन् किञ्चिदोष्ठौ चालयन् तच्चलानानुमेयाक्षरं स्वैकवेद्यशब्दं मन्त्रं शनैरुदीरयेत् । सउपांशुः । मानसस्त्वेवं कार्यः । अक्षरादक्षरं तत्स्वरूपं मनसा सम्यक् विचारयन् तत्तद्देवताध्यानादिपूर्वकं पदविभागं तदर्थभूतं परमात्मानञ्च मनसा ध्यायन् जपेत् । इति । अत्र मानसएव सर्वोत्तमइति सएवाश्रयणीयः ॥ युक्तश्चैतत् । वाचिके उपांशौच जपे वाचिकव्यापारस्य सत्वात् बहिर्मुखता संपद्येत । मानसेतु जपे असत्वाद्बाहिर्व्यापारस्य मनसश्चैकतानता भवति । ततश्च परमात्मन्येव स्थिरीभवेदिति स्मृतिकर्तॄणां हृदयं । भगवत्स्मृतिश्च निरन्तराकार्या इति किलाऽस्माकैःप्राचीनैः ब्रह्मविद्भिः तत्रतत्र क्रियायां ब्रह्मानुसन्धानं मुख्यत्वेन निहितं । तच्चास्माकं ब्रह्मानुसन्धानं, निरिन्द्रियव्यापारे मानसएव जपे संभवति । अत एव निरन्तर-



ध्यानावश्यकता च भगवद्गीतायामध्यायेचाष्टमेऽभिहितं हरिणा ॥ श्लो । अनन्यचेतास्सततं योमां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ इति । ततश्च ब्राह्मणानां प्रतिदिनं क्रियाभिर्वैदिकीभिरेव कालत्रयतां तत्रतत्रैव क्रियायां सदा ब्रह्मानुसन्धानं भवत्विति पूर्वेषामभिप्रायः : तदविरोधेन मानसो जप एव ब्रह्मानुसन्धानान्तरंगभूतः अस्माभिर्जप्यइत्यन्यत्र विस्तरः । तथा च स्मृतिः ॥ श्लो ॥ उत्तमं मानसं जप्यमुपांशुर्मध्यमस्स्मृतः । अधमं वाचिकं प्राहुस्सर्वमन्त्रेषु वैद्विजाः । इति । अथ जपसमये हस्तसंनिवेशक्रमः । व्यासः ॥ श्लो ॥ प्रातरुत्तानपाणिभ्यां स्तब्धाभ्यान्दिनमध्यम । अधोमुखाभ्यां पाणिभ्यां सायं संलक्षितो जपेत् । प्रातर्नासासमौ कुर्यान्मध्याह्ने चोरसासमौ । सायंकालेनाभिसमौ करौ कुर्यादतन्द्रितः । इति ॥ ततः गायत्रीं गणनपूर्वकं जपेत् । तत्र गणने करयोः पर्वाण्येव वराणि । यतोह्ययं गायत्री वेदमाता । वेदस्य पर्वस्वेव गीयमानत्वात् । इयमपि पर्वस्वेव गणनीया । यद्यपि मुक्तामणिप्रवालदर्भग्रन्थिरत्नविशेषसुवर्णमणिरुद्राक्षतुलसीमण्यादिभिः मालां कृत्वा जपः कार्य इत्युक्तं स्मृतिषु, तथापि गायत्रीजपे करपर्वणामेव श्रेयःप्रदता पूर्वैरुररीकृतेति सर्वेष्टसिद्धिः । इति गायत्रीजपविधिः ॥ अथ गायत्र्यर्थविचारः—अर्थविचारश्चावश्यकः । महाभाष्ये—अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा चेत्युपक्रम्य स्थाणुरयं भारहारः किलाभूत् । अधीत्य वेदं नविजानाति योर्थं । योर्थज्ञइत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा इति । अन्यत्र । यदधीतमविज्ञातं निगदेनैवशब्द्यते । अनग्नाविव शुष्कैधो नतज्ज्वलति कर्हिचित् । किं च योग्नि नाचिकेतं चिनुते । यउचैनमेवं वेदइत्यादिषु बहुषु स्थलेषु वेदोक्तक्रियासांगानुष्ठानफलं तत्तत्प्रकरणार्थज्ञानस्याप्युक्तं । तस्मादत्रार्थविचार आवश्यकः । एषविषयः पूर्वं वक्तव्योऽपि प्रधानत्वात् गायत्र्यर्थविचा-

रस्यात्रैव स्थले प्रतिपादितः ॥ तत्सवितुरिति । सवितुः सर्वजग-
त्प्रसवितुः निखिललोकजनकस्येति भावः । देवस्य द्योतनस्वभावस्य
स्वयंप्रकाशचिदेकरसस्येति भावः । तस्य भासा सर्वमिदं विभाती
ति श्रुतेः । वरेण्यं सर्वैरपि स्वाभीष्टसिद्धये प्रार्थनीयं । भर्गः भर्ज
दाह इति धातोरूपं । प्रकृतिप्राकृतलक्षणस्य संसारस्य दाहकः ।
यः नः अस्माकं । धियः । बुद्धिवृत्तीः । प्रचोदयात् । स-
दा प्रेरयति । तस्य बुध्यादिप्रेरकस्य सवितुर्देवस्य वरेण्यं परमान-
न्दैकरसं । तत् भर्गः । धीमहि ॥ ध्यायामइति ॥ स्मृतिभास्करेऽ
यमेवार्थोऽभिहितः ॥ श्लो ॥ तदित्येतत्परं ब्रह्म ध्येयंतत्सूर्यमण्डले ।
सवितुस्सकलोत्पत्तिस्थितिसंहारकारिणः ॥ वरेण्यमाश्रयणीयं य-
दाधारमिदं जगत् । भर्गस्य साक्षात्कारेणाविद्यातत्कार्यनाशनम् ।
(भर्गश्च साक्षात्कारेणाविद्यातत्कार्यदाहकमितिच पाठः ।) देवस्य
ज्ञानरूपस्य स्वानन्दात् क्रीडतोपिवा । धीमह्यहंस एवेति सदैवाऽभे
दसिद्धये ॥ धियोन्तःकरणे वृत्तीः प्रत्यक्प्रवणकारिणीः । यइत्यरूप-
मव्यक्तं सम्यग्ज्ञानादिलक्षणम् । नोऽस्माकं बहुधान्यस्तभेदेनानेक-
देहिनाम् । प्रचोदयात् प्रेरयति सत्यज्ञानादिलक्षणः । विश्वामित्रः
श्लो ॥ देवस्य सवितुस्तस्य धियो योनः प्रचोदयात् । भर्गोवरेण्यं तद्ब्र-
ह्म धीमहीत्यर्थ उच्यते ॥ इत्यद्वैतिनामभिप्रायोऽन्वयक्रमश्च न्यरूपि ॥
वैष्णवसम्प्रदायस्त्वेवं लिख्यते । देवस्य । चेतनाचेतनात्मकजगत्
क्रीडायां मोदमानस्य । अथवा निरतिशयकान्तियुक्तस्य सवितुः ।
सकलजगत्स्रष्टुः वासुदेवस्य परमात्मनः । वरेण्यं सर्वैर्महात्मभिः
प्रार्थनीयम् । तत् भर्गः । तेजः । सर्वेषामज्ञानान्धकारबाधकत्वेन
तेजश्शब्दवाच्यतासिद्धा ॥ सर्वकर्मफलपाकहेतुभूतत्वात् सर्वभरणा
द्वाभर्गः । तत् श्रुत्यन्तोद्घुष्टं भर्गः धीमहि ध्यायेमहीत्यर्थः । देवस्य
भर्गइति भेदस्तु राहोःशिरइतिवत् । आदित्यमण्डलान्तर्वर्तिनं दि-
व्यतेजोमयं पुण्डरीकाक्षं परमात्मानं श्रीमन्नारायणं निरन्तरं चिन्त-

यामीतिभावः ॥ छा । श्रु । यएषोन्तरादित्ये हिरण्मयः पुरुषो दृ-
श्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्वएव सुवर्णः तस्य
यथा कप्यासं पुण्डरीकमेवमक्षिणी । इति छान्दोग्यश्रुतिश्चानुकूलात्र
पक्षे । यः । यत् । सवितृतेजः । नः अस्माकं । धियः ज्ञानानि ।
हानोपादानादिविषयाणि । प्रचोदयात् प्रेरयेत् । प्रार्थनायां लोट् ।
यदित्यर्थे यइति लिंगव्यत्ययः । तथा चायमभिप्रायः । कारणन्तु
ध्येयइति शिखाश्रुतेस्सकलजगत्कारणभूतश्रीमन्नारायणएव ध्येय
इति सिद्धं । योदेवस्सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य
यद्भर्गस्तद्वरेण्यमुपास्महे । इति अगस्त्यपुराणवचनञ्च प्रमाणं । शैवा-
स्त्वेवं मन्यन्ते आदित्यो वा एष एतन्मण्डलमित्यनुवाकमारभ्य तैत्ति-
रीयोपनिषच्चतुर्थप्रश्नस्थचतुर्दशानुवाकस्थितमन्त्रसन्दर्भपर्यालोचन-
यासूर्यमण्डलान्तर्वर्ती परमात्मा सदाशिव एव । नान्यः । तथाच सुद-
र्शनाचार्याः । श्लो ॥ मानामभूदखिलमन्यदिमं प्रदेशमध्यापितास्तादि-
ति मन्त्रविदोभवन्ति । वाच्यं किमस्य सवितुर्वरेण्यः किंवाभ-
वानिति वितर्कपदं नतेषामिति ॥ किञ्च ॥ श्लो ॥ भास्वन्तमेषविषयी-
कुरुतेनमन्त्रः शक्नोति वक्तुमधिदैवतमीश्वरं त्वां । यस्मादयं त्वयि
निरोहति भर्गशब्दः प्रज्ञाप्रचोदकतया तदधीयसे त्वं ॥ २ ॥ गाय-
त्रीमन्त्रार्थविचारेणापीश्वरस्यैव गायत्रीप्रतिपाद्यत्वमित्याहानेन श्लो-
केन ॥ एषमन्त्रः । गायत्री । भास्वन्तं सूर्यं न विषयीकरोति । किंतु
तदधिदैवतं त्वामीश्वरं विषयीकुरुते ॥ कुत इति चेत् । यस्मादयं भर्ग
शब्दः त्वयि निरोहति निरूढो भवति । हरस्स्मरहरो भर्ग इत्या-
दिना ॥ तत इति पूर्वेण सम्बन्धः ॥ तैरेवात्र पुराणवचनान्युदाहृ-
तानीह नलिख्यन्ते ग्रन्थविस्तरभिया । ततस्त एव वदन्ति ॥ प्रज्ञा
प्रचोदकोपि परश्शिव एवेति । भर्ग इति शब्दस्य सान्तपक्षे दोष-
माहुस्त एव ॥ तथाहि ॥ श्लो ॥ सान्तोयमन्तकरिपो यदि भर्गशब्दः
यत्तत्पदद्वयमनन्वयि लिङ्गभेदात् । अन्वेषयेदुभयमन्यदनन्यलिङ्गमश्रू-

यमाणमसमञ्जस एषपक्षः इति । योदेवस्सवितास्माकामिति पूर्वप्रतिपादितप्रकारेण यः सविता नः । अस्माकं । धियः बुद्धीः । धर्मादिविषयिणीः । प्रचोदयात् प्रेरयेत् । तस्य देवस्य सवितुर्वरेण्यं भर्गः तद्रूपं धीमहि । तच्छब्दश्रुतेर्यच्छब्दोध्याहर्तव्यः । यत् सर्वेषां धियः प्रचोदयाति । तदित्यर्थः । यत् सर्वैर्ध्येयन्तदित्यर्थः । अभिन्नलिङ्गयत्तच्छब्दयोरत्राध्याह्रियमाणत्वात् । अयं पक्षः । असमञ्जस इति ॥ तिष्ठत्विदं स्वरेणैवायमसुन्नन्त इति निर्णेतुं शक्यत इति चेन्न । घञन्तेवाऽसुन्नन्तेवा न भेदः । ञिनित्यादिर्नित्यमिति उभयोराद्युदात्तविधानात् ॥ भर्जते संसारदुःखमिति व्युत्पत्तौ । अकर्तरिचकारक इति घञ्कर्त्रर्थत्वादत्र नप्राप्नोति । तथापि ॥ व्यत्ययोबहुलमिति छन्दसि निर्बन्धाभावादेतदपि सिध्यतीति भावः । तत्र प्रमाणन्तु मैत्रायणश्रुतिः । भर्गोदेवस्सधीमहि ॥सवितावै देवः योस्य भर्गाख्यं तच्चिन्तयामीति भर्गाख्यमित्यकारान्तोपपादनात् सान्तत्वं निरकारि । तथाच ॥ श्लो ॥ शब्दश्रुतिर्ह्यसुनिवा घञिवा पदान्ते युक्तंवदत्युभयथा स्वरमाद्यदात्तं । व्यत्यस्तकारकमतैमि पदं घञन्तं मैत्रायणश्रुतिपराहतसान्तभावं । किञ्च मैत्रायणश्रुतौ । एवं पठ्यते । भर्ग भवन्तं चिन्तयामीत्युक्त्वा । कोसौ भर्गाख्य इत्याकांक्षायां । एष रुद्रो भर्गाख्यो ब्रह्मवादिनोवदन्तीत्युपनिषत् । तलवकारिणश्चाहुः । कस्सविताका सावित्रीत्युपक्रम्य । तस्या एष प्रथमः पादः । द्वितीयः पादो भर्गमयः । इति उक्तं । अत्र भर्गशब्दस्य यदि सकारान्तत्वं तर्हि मनोमय इतिवत् भर्गोमय इति स्यादिति । एतादृशानेकश्रुतिप्रामाण्यात् सान्तो नभवतीति सिद्धान्तयित्वा तेषामभिमतमन्वयं चाहुः ॥ श्लो ॥ भर्गः प्रचोदयति यो धियमस्मदीयां तद्धीमहीतिघटना विनिमाय लिङ्गम् । वाच्यस्य भर्ग भवतस्स्वपदाभिधानं भर्गाख्यमित्यपि च साम्बवचोनुरोधः ॥ अत्रच भर्गशब्दस्य प्रसिद्धार्थभूतपरमेश्वरग्रहणं । मैत्रायणतलवकारश्रुत्यविरोधोति महाफलमस्तीति भावः ।

# सन्ध्यावन्दनक्रमः ॥

## पूर्वप्रकाशितात्परम् ॥

आसत्येन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च । सत्येन सत्सु मनुष्यमृगपक्षिनगवृक्षादिषु तिष्ठता सदा वर्त्तमानेनेत्यर्थः । ज्योतिस्स्वरूपेण स्वस्वरूपेण वा प्रकाशमानेनेत्यर्थः । रजसा ज्योतिषा आवर्त्तमानः आसमन्ताद्व्याप्नुवन् परमात्मा अमृतं अमरणधर्मणः देवान् मर्त्यञ्च मरणशीलान् मर्त्यांश्च निवेशयन् स्वेस्वे व्यापारे नियोजयन् स्वकर्मानुगुणमिति शेषः । परमात्मना हि भगवता सर्वे लोकास्स्वस्वकर्मणि अस्वतन्त्राः नियुज्यन्ते । तथाच श्रुतिस्तैत्तिरीयाणां अन्तःप्रविष्टश्शास्ताजनानां श्वेताश्वतरश्च(श्रु)क्षरंप्रधानममृताक्षरं हरः क्षरात्मानावीशते देवएकःइति । भूयस्सृष्ट्वा पतयस्तथेशः विश्वाधिपत्यं कुरुते महात्मा इति च । एवं प्रसिद्धा अन्या अपि श्रुतयोत्र प्रमाणं।ततश्च सत्तारूपेण प्रकाशरूपेण देवमर्त्यादिषु व्यापकोयः परमात्मा स इति फलितम्। हिरण्ययेन सविता रथेनादेवो याति भुवना विपश्यन् । अस्यार्त्थः हिरण्ययेन हिरण्मयेनेत्यर्त्थः । सू । ऋत्व्यवास्त्वयवास्त्वमाध्वीहिरण्ययानि छन्दसीति सूत्रतः हिरण्ययशब्दस्साधुः । रथेन स्यन्दनेन श्रु । एकचक्रमेकधुरं । इत्यादिश्रुत्युक्तलक्षणेन एकेनैव निमेषार्द्धेन द्विलक्षयोजनगामिना अरुणसारथिकेन वालखिल्याद्यनेकमुनिगणनिबिडितसमन्ताद्भागेन रथेन देवः क्रीडासक्तचित्तो भगवान् सूर्यमूर्त्तिः भुवना भुवनानि विपश्यन विशेषतः पश्यन् साक्षिरूपेण पश्यन्नित्यर्त्थः। अथवा जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। ससात्विकस्तु विज्ञेयस्स वै मोक्षार्थचिन्तकः। इति विष्णुपुराणोक्तेः क्षीणकल्मषान् जन्तून् विपश्यन् अनुग्रहदृष्ट्या सर्वबन्धविमोचिन्या पश्यन्नित्यर्त्थः । भुवना इति छान्दसं रूपं भुवनानीत्यर्थे वेदितव्यं । एवं कुर्वन् भगवान् आयाति सर्वत्र गच्छति सूर्यरथस्यार्धनिमेषेणैव द्विलक्षयोजनगमित्वं श्रुतिप्रमाणत्वात् । तथाच खिलेषु पठ्यते निमिषार्धेनैकेन द्वेच शते द्वेसहस्रेच क्रममाणयोजनानां नमोस्तु नळिननाथाय इति ज्योतिर्विदामाधुनिकानां सूर्यगमनरूपोयमभिप्रायः।

यद्यपि नरमणीयः तथापि श्रुतिमनुसृत्यास्माभिरिहालेखि । युक्तिरप्यस्ति। साचेह विस्तरभिया बहुविवादभीत्याच न लिख्यते। उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरं । देवन्देवत्रासूर्य अगन्मज्योतिरुत्तमम् । तमसःपरि तमसः परस्ताद्वर्त्तमानं आदित्यवर्णं तमसः परस्तादितिश्रुतेः । उत्तरं उत्कृष्टं ज्योतिः तेजोमयं देवत्रा देवानां त्रातारं रक्षितारं देवं सूर्यं श्रीसूर्यमूर्तिं पश्यन्तः नेत्राभ्यामध्यात्मदृशाच वयं मुत्तमं ज्योतिरगन्म (श्रु) ज्योतिषां ज्योतिरेकमितिश्रुतेः उत्तमज्योतीरूपमैकार्थ्यप्रत्ययसारं परमात्मानं स्वात्मतया अवगच्छामः । गत्यर्थकानां ज्ञानार्थत्वमप्यस्तीति सिद्धान्तः । उदुत्यञ्जातवेदसं देवं वहन्ति केतवः दृशेविश्वायसूर्य उति। उत् उ त्यं इति च्छेदः। त्यन्तमित्यर्थः । जातानि वेत्तीति जातवेदाः तं जातवेदसं देवं सर्वज्ञं केतवः ध्वजवत् स्थिताः किरणाः उत्वहन्ति उद्गमयन्ति प्रकाशयन्ति। स्वकिरणैः स्वयम्प्रकाशीभवतीत्यर्थः । किमर्थमितिचेत् दृशे विश्वाय विश्वजनानां दर्शनाय उदितस्सन् सूर्यः सर्वविषयप्रकाशकोभवतीति फलितं। खि।श्रु। तथाच खिलेषु श्रूयते। येनविना तिमिरान्धञ्जगदेतद्यत्र सतिच धृतबोधम्। तन्नलिनीभर्त्तारं हर्त्तारश्चापदामीडे । इति । चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्राद्यावापृथिवी(आप्रा द्यावापृथिवी) अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च देवानां सुराणां मध्यइत्यर्थः । चित्रमद्भुतं पूज्यमनीकं सैन्यभूतं देववैरिणां कालनेमिनमुचिहिरण्याक्षान्धकतारकादीनां वधे बद्धपरिकरं सत् उदगात् पूर्वादिशिखरादुदियाय । सूर्योदयस्यासुरबलक्षयहेतुत्वात् । ततः सूर्यस्यभगवतः अद्भुतदेवानीकत्वं युक्तम् । चक्षुर्मित्रस्येत्यादि मित्राख्यः कश्चिद्देवः तस्य वरुणस्याग्नेश्चायञ्चक्षुः उपलक्षणमेतत् । सर्वे सर्वेषामेव देवानामयं चक्षुरितिभावः । यतोयं सुराणामपि चक्षुर्भवति ततो मनुष्याणामयं चक्षुर्भवतीति किमुवक्तव्यमितिभावः । अतोयं भगवान् लोकचक्षुरिति फलितम् । आप्राद्यावेति द्यावापृथिवी आकाशं भूमिश्च अन्तरिक्षं स्वर्गादिकं देवेलाकम् ।

क्रमशः